# महाभारतान्तर्गतं

# श्रीविष्णुसहस्रनामस्तोत्रम्

आचार्यगोविन्दकृतया नामचन्द्रिकया सहितम्

**सम्पादकः**
बन्नञ्जेपदोपाह्वः आचार्यगोविन्दः
विद्यावाचस्पतिः, विद्यारत्नाकरः,
पद्मश्रीपदभाक्

**प्रकाशनी**
तत्वसंशोधनसंसत्,
विद्यामान्यप्रकाशनम्
श्रीहृषीकेशतीर्थसंस्थानम्, रजतपीठपुरम् (उडुपी)
२११०



ŚRĪ-VISṆU-SAHASRA-NĀMA-STROTRAM (samskṛt):
with Nama-Candrikā a commentary in samskṛt
by Bannanje Govindācharya

Edited by : Vidyāratnākara Bannanje Govindācharya

Published by : Tatva-Samśodhana-Samsat
Śrī Vidyāmānya Prakāśana
Śrī Hṛśīkeśa-Tīrtha-Samsthānam,
(Śrī Palimāru Maṭha) Udupi,
Karnataka, (India)
Tel. no: 0820-2523402



I Edition : 2010 may

Copies : 1000

Pages : 32+232

Price : Rs-100/- kh 10

**ISBN** : 978-81-909776-2-3

Cover design : K.M. Sheshagiri

Typeset : Kaddi S. Badarinarayanachar
Poornaprajna vidyapeetha
E-Mail : bnkaddi@gmail.com

Printed at : Rajprakash Prints
Chamarajapet, Bengaluru-18



कृष्णं वन्दे जगद्गुरुम्





प्रणतवान् प्राणिनां प्राणभूतं
प्रणतिभिः प्रीणये पूर्णबोधम् ॥

# आध्यक्षी भणितिः

श्रीविष्णुसहस्रनामस्तोत्रमेतत् । नतु विश्वसहस्रनामान्यपि । तथापि विश्वनाम्नैव प्रारभ्यते चैतत् । कथमेतद् युज्यते? सत्यम् । विश्वम्भरस्य भगवतः स्तुतिरेषा । विघ्नवारकस्य विघ्नेशस्य बिम्बरूपस्योपासनैषा । अत एव मङ्गळमयी स्तुतिरेषा ॥

समस्तं देशं सर्वमनेहसं च सर्वेश्वरः सम्बध्नात्येव । तथैवाक्षरं प्रपञ्चं च । श्रीमद्विष्णुमस्तुवदक्षरमेव नह्यस्ति । ईक्षतेर्नाशब्दमिति सूत्रकार एव निराकार्षीत् विष्णोरवाच्यताम् । प्रत्युत समार्थयत सर्वशब्दसमन्वयं परविद्याद्याध्यायपादचतुष्टयेऽपि । समस्तस्याक्षरस्य यदि स्याद् भगवत्परता विष्णुसहस्रनाम्नामस्तीति किमुतेति कैमुत्यन्यायसिद्धा गुणानुगुणता । सर्वज्ञाचार्यवर्योऽप्याहैकैकस्यापि नाम्नो ह्यनूनशतार्थकताम् ॥

अत एव भगवान् बादरायणोऽवादीत् । 'यानि नामानि गौणानि' इति । गुणा एव पदप्रवृत्तौ निमित्तान्यमीषां शब्दानाम् । कथमेतत् घटते? श्रीमदाचार्यो दिशमसूचयत् । प्राञ्चष्टीकाकाराः अपि परमं प्रमाणम् । निरुक्तव्याकरणादिनैकनिमित्तेषु लब्धप्रतिष्ठाः बहुषु शास्त्रेषु कृतभूरिपरिश्रमाः अनवरतविहिताध्ययनाः जन्मान्तरार्जितसुकृताः



समार्जितहरिगुरुवरानुग्रहाः श्रीमन्तो बन्नञ्जे गोविन्दाचार्याः स्तोत्रमेतत् व्याचख्युः । हरेः गुणगणविज्ञानपूर्वकं स्तुवतो महात्म्यज्ञानपूर्वकः प्रेमा प्रवहत्येव ॥

तामेतां सुकृतां सुकृतिमधियन्तु । नित्यं मननं तन्वन्तु । श्रीगुरुचरणानां दशमाराधनफलरसायनमेतदास्वादयन्तु सहृदयाः ॥

**विकृति-वैशाख-शुक्ल-एकादशी**

**24-5-2010**

**इत्यनेकनारायणस्मृतयः**

**श्रीविद्याधीशतीर्थश्रीपादाः**

**अध्यक्षाः– तत्वसंशोधनसंसत्,**
**विद्यामान्यप्रकाशनम्**
**श्रीहृषीकेशतीर्थसंस्थानम्,**
**श्रीपलिमारुमठः (उडुपी)**

# अर्पयामः कृतज्ञताम्

गणकयन्त्रेणाक्षराणि संयोज्य मनोज्ञतया पुस्तकविन्यासस्य निरूपणेनाक्षरस्य नारायणस्याक्षरां सेवां कृतवते श्रीमते (कड्डी)बदरीनारायणाचार्यमहोदयाय विदुषे–

अक्षरशोधनकर्मणि सहकृतवते श्रीमते विजयसिंह इति सुगृहीत-नामधेयाय विदुषे–

आवरणपत्रविन्यासे कृतपरिश्रमाय श्रीमते के. एम्. शेषगिरि-नामधेयाय कलाविदुषे–

मनोज्ञे मुद्रणकर्मणि कृतसहकारेभ्यः 'राज् प्रकाश् प्रिण्ट्स्-बेङ्गळूरु' इत्यभिधायां संस्थायामधिकृतेभ्यः सहृदयेभ्यः–

प्रीत्या विक्रीयाधिजिगांसमानेभ्यः समेभ्यः पाठकमहोदयेभ्यः–

वितरतु विष्णुसहस्रनामप्रतिपाद्यः श्रीनारायणः सर्वेषामतुला-मनुग्रहपरम्पराम् ॥

**–प्रकाशकाः**



**यस्य स्मरणमात्रेण**
**जन्मसंसारबन्धनात् ।**
**विमुच्यते नमस्तस्मै**
**विष्णवे प्रभविष्णवे ॥**

**नमः समस्तभूताना-**
**मादिभूताय भूभृते ।**
**अनेकरूपरूपाय**
**विष्णवे प्रभविष्णवे ॥**

# भूमिका

अयमेकः प्रतनानां किल प्रियः सम्प्रदायः, यत् स्वेष्टदेवताया नाम्नां सहस्रेण स्तवनम् । सन्ति बहूनीदृशानि सहस्रनामस्तोत्राणि– विष्णुसहस्रनामस्तोत्रम्, वासुदेवसहस्रनामस्तोत्रम्, नरसिंहसहस्रनामस्तोत्रम्, शिवसहस्रनामस्तोत्रम्, ललितासहस्रनामस्तोत्रम्, गणेशसहस्रनामस्तोत्रम्– इत्येवमादीनि ॥

तत्र विष्णोः सहस्रनामान्येव पुराणेषु बहुधा पठन्ति । तेषु मुख्यतः सर्वत्र सर्वाधिकतया प्रथितानि तु महाभारते ग्रथितानि विष्णोः सहस्रनामान्येव ॥

पठ्यते महाभारते शिवसहस्रनामस्तोत्रमपि । तदपि नैकवारम्, द्विः । शान्तिपर्वण्येकं (अ.२९०) दक्षप्रोक्तम्, अनुशासनपर्वण्येकम् (अ.४८), उपमन्युप्रोक्तम् । अथापि महाभारतगते अपि ते नातिप्रथिते । विष्णुसहस्रनामस्तोत्रमेव सर्वैराद्रियते, नित्यपठनायोपयुज्यते च ॥

✻

अस्यैकं भाष्यमुपलब्धमाचार्यशङ्करप्रणीतमिति प्रथितम् । अस्त्यत्राभिप्रायभेदो विमर्शकानाम्– भाष्यकारः प्रथम आचार्यशङ्कर एवेदं प्रणिनायेति सम्प्रदायज्ञाः । पाश्चात्यः कश्चन तत्पीठमारूढो यतिरस्य रचयिता स्यादित्यपरे दोषज्ञाः । यदि भाष्यकारेणैव शङ्करेण प्रणीतम्, तर्हि सम्प्रत्युपलब्धासु



टीकास्वियमेव प्रतनतमा । तत आचार्यरामानुजस्य पन्थानमनुपतन् पराशरभट्टोऽप्यस्य विस्तृतां रुचिरां पाण्डित्यप्रचुरां टीकामरीरचत् ॥

आचार्यमध्वो न समग्रस्य नाम्नां सहस्रस्य निर्वचनं निजगाद । अथापि तत्रतत्र स्वग्रन्थेषु बहूनां नाम्नामपूर्वां निर्वचनसरणिं दर्शयामास न केवलम्, विष्णुसहस्रनाम्नामितरेभ्यः सहस्रनामभ्यो वैशिष्ट्यमाध्यात्मिकं च महत्त्वम्, वेदमूलत्वं च प्रथममाचार्यमध्व एव प्रकटीकृतवान् ॥

माध्वेषु विद्वत्सु विष्णुसहस्रनाम्नां प्रथितो व्याख्याता श्रीवादिराजयतिराजः । परन्तु न सहस्रस्यापि नाम्नां विवरणं तस्योद्देशः । समग्रस्यापि महाभारतस्य स किल सङ्क्षिप्तां टीकामाटीकत लक्षालङ्कार इति । लक्षश्लोकात्मकस्य महाभारतस्यालङ्कारोऽयं ग्रैवेयकमिव नारीग्रीवाया इति । अस्य लक्षालङ्कारस्य मध्ये विष्णुसहस्रनाम्नां कानिचन क्लिष्टार्थानि नामान्यपि व्यव्रियन्त । लक्षालङ्कारे निबद्धः सहस्रालङ्कारोऽयम्, रत्नमालायां नायकोपल इव ॥

ततः पूर्वतनी काचिट्टीका सम्प्रत्युपलभ्यते । श्रीजयतीर्थान्तेवासिना श्रीविद्याधिराजतीर्थयतिना कृतिना रचिता । किन्तु तत्रापि विमर्शका विवदन्ते– यतस्तत्र बहूनि वाक्यानि शाङ्करभाष्यगतान्येव विना मनागतिक्रमं यथावदुपलभ्यन्ते । तेन नेयं विद्याधिराजकृतिरिति बहवो विपश्चितोऽभिप्रयन्ति ॥

किञ्च स व्याख्याता तत्रतत्र प्रमाद्यति । यथा ओजःशब्दव्याख्याने–‘अनभिभाव्यत्वमोजः । ‘ओजस्त्वनभिभाव्यत्वात्’ इत्यभिधानात्’ इति पठ्यते । कोशवाक्यस्यान्वयमविज्ञायैव प्रमादादेवं व्याख्यायि । तथाहि समग्रं कोशवचनम्–**‘सर्वचेष्टयितृत्वात्तु प्राणोऽभिभवशक्तितः । ओजस्त्वनभिभाव्यत्वात् सहश्च स्वेच्छया कृतेः । बलं विधारकत्वाच्च विधृतिर्वायुरुच्यते’** इति । **‘त्वन्ताथादि न पूर्वभाक्’** इति कोशान्तरगतवाक्यजनितोऽयं भ्रमः । अत्र तु त्वन्तं पूर्वभाक् । तथाहि ‘प्राणस्तु सर्वचेष्टयितृत्वात् । ओजस्तु अभिभवशक्तितः । सहश्च अनभिभाव्यत्वात्’ इत्यन्वयः । तेन पराभिभवनशक्तिरेव

'ओजः' इत्युच्यते । ननु परैरनभिभाव्यत्वसम्पादको मर्षणाख्यः सामर्थ्य-विशेषः । तेन चिन्त्यमेवैतद् व्याख्यानम् ॥

अपिच, रघुनाथतीर्थयतिना कृतशेषचन्द्रिकेन बृहतीसहस्रव्याख्यानमिषेण सहस्रं च नामानि व्याख्यातानि । भगवन्तरायश्चान्यो व्याख्याता, यश्चापि बृहतीसहस्रं व्याचख्यौ । सत्यसन्धतीर्थीयं चापरं व्याख्यानम्, प्रायो माध्व-परम्परायां पञ्चमम् ॥

अपरश्च राघवेन्द्रयोगी नाम कश्चिद् विपश्चित् सहस्रनाम्नां स्वतन्त्रं सुन्दरं च व्याख्यानं रचयामास । यः शङ्करभाष्यगतानि व्याकरणदुष्टानि निर्वचनानि निर्भयं निराचकार । यश्च न केनापि सिद्धान्तेन निर्बद्धचिन्तनः, नापि कस्मिंश्चन मतविशेषे बद्धादरः, किन्तु स्वतन्त्रश्चिन्तकः ॥

एवमाङ्ग्लभाषायाम्, हिन्दीभाषायाम्, कन्नडभाषायां च प्राज्यमनूदितानि नामान्येतानि । तदिदमदभ्रव्याख्यानता नाम नामसहस्रस्यानन्यो महिमाति-शयः ॥

✻

किं तत् तावद्वैशिष्ट्यं विष्णुसहस्रनामस्तोत्रस्य?

अत्र पुनरत्यन्तमपूर्वाणि चत्वारि कारणान्याविश्चकाराऽचार्यमध्वः–

१. विष्णुसहस्रनामस्तोत्रं सर्वशास्त्रसारभूतस्य महाभारतस्यापि सारः ।

२. एकैकमपि नाम निरन्तरमनूनशतार्थकम् ।

३. भगवतः सहस्रं रूपाणि सन्ति । तेषामेतानि सहस्रं नामानि भवन्ति ।

४. बृहतीसहस्रमन्त्राणां सारभूतानि चेमानि नामानि ।

अथ चैकैकमपि कारणं किञ्चिद् विमृशाम ॥



## १. नामसहस्रस्य सर्वशास्त्रसारता

स्मरन्ति च–

**'शास्त्रेषु भारतं सारस्तत्र नामसहस्रकम् ।**
**'वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा'** इति ।

**'भारतं सर्वशास्त्रेषु भारते गीतिका वरा ।**
**'विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद् द्वयम्'** इति च ॥

तेन महाभारतं सर्ववैदिकवाङ्मयसारः । विष्णुसहस्रनामस्तोत्रं महाभारतसार इत्यन्तत एतस्य स्तोत्रस्य सर्वशास्त्रसारताऽभिहिता भवति ॥

## त्रय आयामास्त्रयोऽर्थाः

हरिवंशे चैवमुच्यते–

**'वेदे रामायणे चैव पुराणे भारते तथा ।**
**'आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते'** ॥

प्रमेयमेतत् किञ्चिद् विस्तरेण विवेचयाम । सर्वशास्त्राणां सारस्य भारतस्य त्रयोऽर्था इति महाभारत एव स्फुटम्–

**'मन्वादि केचिद् ब्रुवते ह्यास्तीकादि तथाऽपरे ।**
**'तथोपरिचराद्यन्ये भारतं परिचक्षते'** ॥

अयमर्थः– केचिदाचक्षते भारतमास्तिकान् पाण्डवानादाय प्रवृत्ता कथेति । अयमैतिहासिकोऽर्थः । अपरे ब्रुवते मननीयानि तत्वान्यादाय, तान्यस्माभि-रनुष्ठेयानीति नीतिबोधनाय प्रवृत्तं भारतमिति । अयमाधिमानसिकोऽर्थः । अथचान्ये मान्यतमा मन्यन्ते सर्वोपरिचरं समतीतक्षराक्षरं नारायणमादाय प्रवृत्तं तद्गुणैकप्रकाशनपरं भारतमिति, अयमाध्यात्मिकोऽर्थः ॥

कानि मननीयानि तत्वानि? इमान्यष्टादश–

| | | |
|---|---|---|
| १. धर्मः | ७. धृतिः | १३. मननम् |
| २. भक्तिः | ८. स्थितिः | १४. निदिध्यासनम् |
| ३. ज्ञानम् | ९. योगः | १५. शीलम् |
| ४. वैराग्यम् | १० प्राणः | १६. विनयः |
| ५. प्रज्ञा | ११. बलम् | १७. वेदविद्या |
| ६. मेधा | १२. श्रवणम् | १८. वेदवेद्यो भगवान् |

तानीमानि तत्वानि भारते सप्त व्यक्तयः प्रतिनिदधते–

१. धर्मराजः – धर्मः

२. भीमः – भक्त्यादिबलान्तं दशकम् ।

३. अर्जुनः – श्रवणादित्रयम् ।

४. नकुलः – शीलम् ।

५. सहदेवः – विनयः ।

६. द्रौपदी – वेदविद्यामानिनी भारती ।

७. श्रीकृष्णः – वेदवेद्यो नारायणः ।

एषां सप्तानां महात्मनां कथेयमित्यैतिहासिकं मुखम् (आस्तीकादि) । सप्तव्याजेनाष्टादश मननीयानि तत्वानि मनस्यारोहयतीति मनःशास्त्रीयमपरं मुखम् (मन्वादि) । महाभारतं प्रतिश्लोकं प्रतिपदं प्रत्यक्षरं सर्वस्मादुपरिचरं परं ब्रह्म नारायणाख्यमष्टादशमेव मुख्यत आख्यातीत्याध्यात्मिकं तृतीयं मुखम् (उपरिचरादि) ॥

ऐतिहासिकमर्थमवगमयितुं समग्रं भारतं जागर्ति । न तत्र सारवार्ता । मनःशास्त्रीयस्यार्थस्य सारो भगवद्गीता । सर्वमपि भगवन्नामेत्युपरिचरार्थस्य सारः श्रीविष्णुसहस्रनामस्तोत्रमिति ॥

एवं तत्वशास्त्रेषु महाभारतं महोन्नतः सारः । महाभारतस्य त्रिषु चार्थेषु तृतीय उपरिचरादिरेव सर्वोन्नतः सारभूतोऽर्थः । तस्य सार इदं स्तोत्रमित्यसाधा-



रणोऽस्य गरिमा । नान्यस्य कस्यापि सहस्रनाम्नः सर्वशास्त्रसारत्वं नाम महत्त्वमस्ति । इदमेकं वैशिष्ट्यम् ॥

## २. शतमर्थाः, अनूनशता अर्थाः

इदं द्वितीयं वैशिष्ट्यम्–

**'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।**
**'विष्णोः सहस्रनामापि निरन्तरशतार्थकम्'** ॥

शतमिति न शतमेव । किन्तु शतावरम् । शतादप्यधिकार्थम्, अनूनशता-र्थमित्यर्थः । त्र्यर्थेभ्यो वेदेभ्यो दशावरार्थं महाभारतं वरम् । तत्रापि शतावरार्थं विष्णोः सहस्रनामस्तोत्रं वरिष्ठमिति ॥

वेदेषु मन्त्रास्तावत् अग्निवायुवरुणादीनमरान् स्तुवन्त इव पठ्यन्ते । तान-न्तर्यामिपरतयाऽनुसन्धाय मन्त्रार्थो निश्चेतव्यो भवति । भारतेन तत् कार्यं सुकरमभवत् । यद् भगवतः श्रीहरेर्महिमानमितिहासमुखेनास्मत्पुरः प्रस्था-पयति । अथ भारतमपि धर्माधर्मयोः, देवदानवानाम्, दुर्जनसज्जनानां सङ्ग्रामकथा । आपाततो यस्यकस्यापि कथा । दुर्योधनस्य दुःशासनस्य कर्णस्य शकुनेरपि । तत्रान्तर्वाहिनी भगवद्गुणभणितिगङ्गा पुनरन्विष्यावगाहनीया भवति । न तथा विष्णोर्नामसहस्रम् । आदावन्ते च, अन्तर्बहिश्च भगवन्नामैव केवलम् । नान्यस्य कस्याप्यत्र चञ्चुप्रवेशः ॥

एवं शब्दराशिषु भगवत्परतान्वेषणस्य परा काष्ठा विष्णोः सहस्रनामानि । एकैकस्मिन्नपि नामन्यनूनशतानां गुणानामनुसन्धानम् । सहस्रेण नामभि-र्लक्षाधिकानां गुणानाम् ॥

शतमर्था इति च साकूतमिवेदं वचनम् । अनन्यमेतदनुसन्धानम् । एकस्य नाम्नः शतमर्थाः । सहस्रस्य नाम्नां लक्षमर्थाः । एवं लक्षगुणानामनुसन्धानं नाम भारतगतानां लक्षश्लोकानामेवानुसन्धानम् । द्वात्रिंशल्लक्षाणामक्षराणां सारानुसन्धानम् ॥

तदिदं विष्णोर्नामसहस्रस्य द्वितीयं वैशिष्ट्यम् ॥

## ३. सहस्रं रूपाणि

अन्यानि सहस्रनामानि एकस्या एव देवताया एकस्यैव रूपस्य, आहो कतीनाञ्चन रूपाणां नामानि भवन्ति । अत्र तु भगवतः सहस्रं रूपाणि । तद्वाचकानि च सहस्रं नामानि । तदिदं तृतीयं वैशिष्ट्यम् ॥

नामानि च सहस्रम् । रूपाणि च सहस्रम् । नान्येषु क्वापि सहस्रनामस्वेतादृशं वैशिष्ट्यं पश्यामः । अन्यच्चात्र स्मर्तव्यं भवति । सहस्रमिति न सहस्रमेव । अन्तशून्यान्यनन्तानि रूपाणि । तेनानन्तानां रूपाणामनुसन्धानं चात्रेष्यते ॥

सहस्रमिति पदं चैतमेवार्थमाह । भगवतोऽनन्तरूपैः सह सरतीति सहस्रमित्युच्यते । तेनैतानि नामानि भगवतोऽनन्तानि रूपाणि, अनन्तांश्च गुणानुद्गायन्ति । तमिममनन्तं महिमानं क्वान्यत्र पश्येम, ऋतेऽस्मात् स्तोत्रराजात्?

## ४. सहस्रं मन्त्राः

विष्णोः सहस्रनाम्नां तुरीयं वैशिष्ट्यं तेषां साक्षाद् वेदमूलत्वम् ॥

ऐतरेयब्राह्मणे श्रूयते– महाव्रतं नाम पुरातनो महान् यज्ञः । यज्ञे त्रिष्वपि कालेषु त्रीणि हवनानि भवन्ति– प्रातःसवनम्, माध्यन्दिनसवनम्, सायंसवनमिति । प्रतिसवनमृत्विजो बह्वृचा द्वेद्वे शस्त्रे पठन्ति । शस्त्रमिति ऋग्वेदगतो विशिष्टो मन्त्रसमुदायः । अप्रगीतमन्त्रसाध्यं स्तुतिशंसनमित्येतत् । प्रगीतमन्त्रसाध्यं सामवेदिभिः क्रियमाणं शंसनं स्तोत्रमित्युच्यते ॥

तदेवमृक्शाखिभिर्यागकाले क्रियमाणमृङ्मयं भगवद्गुणशंसनं शस्त्रमित्युक्तं भवति । गुणशंसनादेव हि तानि शस्त्राणि भवन्ति । छन्दोबद्धानि शस्त्राणि । गानबद्धानि स्तोत्राणि । प्रातःसवने द्वे शस्त्रे भवतः– आज्यशस्त्रम्, प्रउगशस्त्रमिति । माध्यन्दिने मुख्यसवने च द्वे– वैश्वदेवशस्त्रम्, निष्केवल्यश-



स्त्रमिति । सायं पुनरन्तिमहवनेऽपि द्वे– मरुत्वतीयशस्त्रम्, आग्निमारुतशस्त्रमिति ॥

एवमेषु षट्सु शस्त्रेषु माध्यन्दिने मुख्यहवने पठ्यमानं द्वितीयं शस्त्रं मुख्यतमम्– यत् निष्केवल्यं शस्त्रमाहुः । केवलं भगवतोऽसाधारणानि गुणरूपाणि निश्चित्य निष्कृष्य च शंसतीत्येव तच्छस्त्रं निष्केवल्यं निगदन्ति ॥

अस्यैव शस्त्रस्यापरमभिधानं बृहदुक्थमिति । भक्त्या शंसंशंसं भगवन्तमुत्थापयतीत्युक्थम् । केवलं निष्केवल्यशस्त्र एव सहस्रं मन्त्रा भवन्ति । अत एव बृहत् । बृहच्च तदुक्थं च बृहदुक्थम् । बृहतीच्छन्दोमयेन मन्त्रसहस्रेण प्रस्तूयत इति । अत एव च बृहतीसहस्रमिति प्रथितं नामास्य बृहदुक्थस्य ॥

षट्त्रिंशदक्षरं छन्दो बृहतीत्युच्यते । प्रतिपादं नवाक्षराणि । अथवा त्रिषु पादेष्वष्टावक्षराणि, कस्मिंश्चिदेकस्मिन् द्वादशाक्षराणि । इयमक्षरव्यवस्था यत्र पादबद्धं छन्दः । तदभावेऽपि, यस्मात्कस्माच्चिदपि च्छन्दसः पृथक्कृत्योपसङ्गृहीतानि षट्त्रिंशदक्षराणि बृहतीपदभाञ्जि भवन्ति । बृहतीसहस्रबद्धे बृहदुक्थेऽप्येवम् । विभिन्नच्छन्दसां मन्त्राणां समुदायरूपस्य बाह्वृच्यवेदस्य प्राचां मतेनाक्षरसङ्ख्या ४,३२,००० । त इमे द्वादशसहस्राणि बृहत्यो भवन्ति–

$$\frac{\text{४,३२,०००}}{\text{३६}} = \text{१२,०००}$$

तेन बृहतीसहस्रं नाम समग्रस्यर्ग्वेदस्य द्वादशो भाग इत्यवसितम् । अपिच बृहती प्राणतत्वसम्बन्धिनीति प्राणोपासका विदन्तो वदन्ति । बृहत्या देवताः– लक्ष्मीः, सरस्वती, भारती, तारा च गरुडश्च । अतो भगवतोऽप्यतिप्रिया बृहती ॥

नैते सहस्रं बृहतीमन्त्राः साक्षाद् वेदे पठिताः । पृथक्पृथक्प्रकरणेषु पठिताः, अन्यान्यच्छन्दोभिर्ग्रथिताः एकत्र सङ्गृहीता यथा सहस्रं बृहत्यो भवन्ति, षट्

त्रिंशत्सहस्राण्यक्षराणि भवन्ति । मन्त्रसंयोजनक्रमस्तु ऐतरेयारण्यके विवृतो वेदितव्यः ॥

एवं संयोजितस्य बृहतीमन्त्राणां सहस्रस्य सारो विष्णोः सहस्रनामानि । एकैकस्य मन्त्रस्यैकैकं नाम । एकैकमपि नाम निष्केवल्ये प्रस्तुताया एकैकस्या बृहत्याः सारः । मन्त्रमयस्य औषधस्य सारगुळिका । तदिदं तुरीयं वैशिष्ट्यम् ॥

## नाड्यो नक्तन्दिवं च

बृहतीबद्धस्य मन्त्रसहस्रस्यापि किञ्चदान्तरं रहस्यमस्ति । एकस्मिन् ३६ अक्षराणीति प्रायः ३६ स्वराः, ३६ व्यञ्जनानि च । 'ग' इति नैकमक्षरम्, द्वे अक्षरे । गकार एकम् । अकारोऽपरम् । एवं ३६ सहस्राक्षरे मन्त्रे ३६ सहस्राणि स्वराः । ३६ सहस्राणि व्यञ्जनानि । एवं संहत्य ७२ सहस्राण्यक्षराणि ॥

स्यादपि क्वचिदपवादः । क्वचिदथ व्यञ्जनसंयोगादृतेऽपि केवलं स्वर एव स्यात् । यथा 'अग्निमीळे' इत्यत्र अकारः । संयुक्ताक्षरेषु केवलं व्यञ्जनमेव स्वरयोगादृतेऽपि पुनरावर्तेत । यथा पूर्वोदाहरण एव 'ग्नि' इति । अत्र गकारो न स्वरोत्तरः । किन्तु व्यञ्जनोत्तरः । अथापि समष्टया स्वरव्यञ्जनयोः सङ्ख्यासामग्र्यं भवति । यथा 'अग्नि' इत्यत्र प्रथमवर्णे स्वर एव श्रूयते 'अ' इति । न व्यञ्जनम् । तथा 'ग्नि' इत्यत्र द्वे व्यञ्जने श्रूयेते गकारनकारौ । एक एव च स्वर इकारः । संहत्य च समानं सङ्ख्यानं भवति– द्वौ स्वरौ द्वे व्यञ्जने इति ॥

तेन बृहतीसहस्रे ३६,००० स्वराः, ३६००० व्यञ्जनानि भवन्ति । संहत्य ७२ सहस्राण्यक्षराणि भवन्ति । तेषु ७२ सहस्राणि भगवद्रूपाणि । प्रतिमन्त्रं प्रतिपाद्यानि द्वासप्तती रूपाणि । स्वरेषु षट्त्रिंशत्सहस्राणि पुरुषरूपाणि । व्यञ्जनेषु षट्त्रिंशत्सहस्राणि स्त्रीरूपाणि । अहो लीला भगवतः ॥



प्रतिमन्त्रं ७२ रूपाणीत्यवेदिष्म । एवं सहस्रं नामानीति न केवलं सहस्रं रूपाणि, किन्तु द्वासप्ततिसहस्राणि रूपाण्यपि ॥

नात्रैव पर्यवसिता नामोपासना । अन्यदप्यस्ति वक्तव्यम् । अमुख्यानामतिसूक्ष्माणां च सङ्ख्याने संहता ७२ कोटयः, ७२ लक्षाणि च नाड्यः । तत्र प्रधाननाड्यस्तु द्वासप्ततिसहस्राणि । वामे ३६ सहस्राणि । दक्षिणे ३६ सहस्राणि ॥

बृहतीसहस्रगतानि ७२ सहस्राणि रूपाण्येव नाडीष्वपि निहितानि । वामभागगतासु ३६ सहस्रनाडीषु भगवतः ३६ सहस्राणि स्त्रीरूपाणि । दक्षभागगतासु तावतीषु नाडीषु तावन्त्येव भगवतः पुरुषरूपाणि ॥

अथ चेदमवसितम्– सकृच्चेत् पठ्यते विष्णुसहस्रनामस्तोत्रं सकृत् पठितं बृहतीसहस्रं यत्फलं तावत् फलमाप्नुयात् । द्वादशकृत्वः पठितं समग्रस्यर्ग्वेदपठनस्य फलमादधाति । एवं सहस्रनाम्नां पठनेन ७२ सहस्राणां नाडीनां शुद्धिः । शुद्धायां नाड्यां निवर्तन्ते रोगाः, वर्धते चाऽयुः ॥

सहस्रं नामानि किल बृहतीनां सहस्रस्य सङ्क्षिप्तरूपाणि । तेनैकैकेन नाम्ना पठितेन द्वासप्ततिनाडीनां शुद्धिः । नामसहस्रस्य पठनेन मुख्यानां द्वासप्ततिसहस्रनाडीनां शुद्धिः । मुख्यासु शुद्धासु ७२लक्षोत्तराः ७२ कोटयोऽप्यवान्तरनाड्यः शुद्ध्यन्ति ॥

भक्त्याऽम्नातानि नामानि नाम्नां नादतरङ्गमहिम्ना परिहरन्ति रोगानिति फलश्रुतिरेव घोषयामास –**'रोगार्तो मुच्यते रोगात्'** इति ।

अर्बुदादयो घनामया अपि नामयज्ञेन निवर्तन्त इति ज्ञायते । नैकानि चात्रोदाहरणानि संशीतिहरणानि भवन्ति ॥

✻

अथाधिकालं किञ्चिदुपासनमत्र भवति । **'शतायुः पुरुषः'** इति श्रुतिः । शतं वर्षाणीति च ३६००० अहानि; ३६००० रात्रयः ॥

बृहतीसहस्रगतानि ७२ सहस्ररूपाण्येवानेहसि च स्थित्वा दिवानिशं पुरुषायुषं नियमयन्ति। ३६ सहस्रनिशासु ३६ सहस्राणि स्त्रीरूपाणि। ३६ सहस्रेष्वहस्सु ३६ सहस्राणि पुरुषरूपाणि। एतान्येव ७२ सहस्राणि रूपाणि विष्णुसहस्रनामप्रतिपाद्यानि च ॥

तेन विष्णोर्नामसहस्रमायुर्वृद्धिं च साधयेत्। न केवलं सहस्रं रूपाणि। ७२ सहस्राणि रूपाणि। ततोऽपि सूक्ष्मानुसन्धाने ७२ लक्षोत्तराः ७२ कोटयश्च भगवद्रूपाणि स्तोत्रेऽस्मिन् अनुसंहितानि भवन्ति ॥

## सहस्रमेव नामानि

आपाततः परिगणनेऽत्र सहस्रतोऽप्यधिकानि नामानि सन्ति। अस्माकं तु सहस्रमेव नामानि विवक्षितान्यन्यूनान्यनधिकानि। यत इमानि भगवतः सहस्रमेव रूपाणि प्रतिपादयन्ति नामधेयानि भवन्ति। अपिच बृहतीमन्त्राणां सहस्रस्य सारं सङ्गृह्णानानि अभिधानानि। तथाच सहस्रमेव नामानि यथा स्युस्तथा संयोज्य सङ्ख्येयानि भवन्ति ॥

ततः क्वचिद् द्वेद्वे पदे संयोज्य एकं नामेति गणयन्ति सङ्ख्याविदः। तत्रापि न सर्वेषामैककण्ठ्यम्। पदसंयोजनेऽपि भिन्नानि मतानि भवन्ति। विभिन्ना विद्वांसः। विभिन्ना मतयः। विभिन्नानि नामसंयोजनानि। के द्वे पदे योजनीये, केषाञ्चेषां योजनेन सहस्रत्वं सम्पादनीयमित्यत्र निश्चितं किमपि गमकं नास्ति ॥

तत्रेदमेकमुदाहरणम्–**'पवित्रं मङ्गलं परम्'** इत्यत्र 'मङ्गलं परम्' इति द्वे पदे संयुक्ते एकमेव वा नामधेयं निष्पादयेयुः, द्वे वा भवेतां भिन्ने नामधेये इति। अथापि नामस्वैकपद्यं स्वरसं सूक्तं च। अतः यत्र द्वे पदे समस्य शक्यमैकपद्यं सम्पादयितुम्, शक्यमर्थोऽनुसन्धातुम्, शक्यं चार्थानुगुणं निर्वक्तुम्, प्रायस्तान्येव संयोज्य नाम्नां सहस्रतां सम्पादयितुमिह प्रयतितम् ॥



बृहतीसहस्रे षट्त्रिंशदक्षरतासम्पादनाय मन्त्रमध्ये यथाकथाच किल पदानि प्रतृन्दन्ति। तथाऽत्रापि। यत्रकापि विच्छिन्द्येत, यत्रकापि संयुज्येत। सर्वथा भगवन्नामधेयादृते किमन्यत् स्यात्?

## समाननामानि रूपाणि

अत्र कानिचन नामपदानि द्विस्त्रिः क्वचिच्चतुर्वारं वारंवारमावृत्तानि दृश्यन्ते। अधिकसप्ततानि द्विरावर्त्यन्ते। द्वादश त्रिः। द्वे चतुर्वारम् ॥

नैवं नाम्नामाम्रेडितमभविष्यत् यदि केवलं नाम्नां सहस्रस्य निर्देश एवास्य स्तोत्रस्योद्देशः। नहि एकस्यैव नामधेयस्यासकृदुक्त्या कथञ्चिन्नाम्नां सहस्रतासम्पादनं पारदृश्वनां मुनीनां शोभते। तत्रापि सहस्रनामस्तोत्रेषु सर्वश्रेष्ठे स्तोत्रे। नहि भगवतो नामदारिद्र्यं नाम विद्यते ॥

तेनेदं निर्विचिकित्सं सिद्ध्यति– तानीमानि भगवतो रूपाणां सहस्रस्य नामानीति। युज्यते चैकमेव नाम द्वयोर्बहूनां वा रूपाणाम् ॥

भगवतो दशसु रूपेषु द्वयोरेकमेव नाम श्रूयते– षष्ठोऽवतारो भार्गवोऽपि रामः। सप्तमो दाशरथिरपि रामः ॥

तयोर्विभिद्य निर्देशार्थं सविशेषणं निर्दिशामः– भार्गवो राम इति राघवो राम इति। जामदग्न्यो राम इति दाशरथी राम इति। परुशराम इति कोदण्डराम इति ॥

वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्ध इति भगवतश्चतुर्मूर्तयः। चतुर्विंशतिमूर्तिष्वपि चतसृणां तान्येव नामानीषद् व्यत्यासेन पठ्यन्ते– सङ्कर्षणो वासुदेवः प्रद्युम्नोऽनिरुद्ध इति ॥

एकस्मिन्नेव काले समाननामकं रूपद्वयमपि भवति। बादरायणोऽपि कृष्ण उच्यते। अष्टमोऽवतारोऽपि कृष्णः। विशिष्य निर्देशार्थमेकं कृष्णद्वैपायनमाचक्षते। अपरं वासुदेवं कृष्णम् ॥

कृष्ण इति दशस्ववतारेष्वप्येकं रूपम्। चतुर्विंशतिरूपेष्वपि। धर्मतनयेष्वप्येकः कृष्णः । सहस्ररूपेष्वपि रूपद्वयम् ॥

नाम्नामावर्तनेऽपरमपि कारणं स्यादिति सम्भाव्यते । सकृत् प्रयोगे शतमर्था अनुसन्धेयाः । द्विः प्रयोगे द्वे शते । त्रिः प्रयोगे त्रीणि शतानि । चतुर्वारं प्रयोगे चत्वारि शतान्यर्थाः । **'निरन्तरशतार्थकम्'** इति वचनादिदमित्थमित्यवसीयते ॥

शतमित्यस्य शतादन्यूनमित्येवार्थः, नाधिकव्यवच्छेद इत्युदितम्। नाम्नामावृत्त्या चेदमित्थम्भावेन निश्चीयेत। अथाप्यहो दौर्भाग्यं नः, यदिमेऽर्थविशेषाः एतावन्तमनेहसमनाविष्कृता एव स्थिताः ॥

## दुरधिगमाः शतमर्थाः

स्तादेतत्। मा भूच्छताधिकानामर्थानामनुचिन्तनम्। अथ कथञ्चिच्छतमर्थाः शक्यमनुसन्धातुम्? प्रायो न शक्यमेव । कतिपयानां नाम्नां महता क्लेशेन शक्येत शतार्थतासम्पादनम् । नोत सर्वेषाम् ॥

निदर्शनार्थमुल्लेखमर्हत्ययमितिहासः—

शालिवाहनशके द्विशतोत्तरे वत्सराणां सहस्रे गते कदाचिदाचार्यमध्वः 'कासरगोडु' ग्रामपरिसरे कञ्चन देवालयमनूवास । तदा तत्र काचन विद्वत्सभा प्राचलत्। वेदार्थविवादे विद्वन्मण्डली निममज्ज। मध्येचर्चमाचार्यमध्वोऽपूर्वं प्रमेयमेकमाविश्चकार—

**'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते।**
**विष्णोः सहस्रनामापि निरन्तरशतार्थकम्'** इति।

त्र्यवरार्थाः सर्वे वेदाः। दशावरार्थं सर्वं भारतम्। शतावरार्थं विष्णोः सहस्रनामेति ॥



एकैकमपि शतार्थमित्येतदुद्गिरणं पण्डितानामप्यशक्यजरणं बभूव। न ते तत्र विशश्वसुः । अतो निराधारमेतदित्याक्षिपन्त उत्तस्थिरे । नहि प्रतिज्ञामात्रेण वस्तुसिद्धिः । यत् प्रत्यज्ञायि तत् समर्थ्यताम्, निरूप्यन्तां शतमर्था इत्याजुहुविरे ॥

आचार्यमध्वः स्वीचकाराऽह्वानम् । विवरीतुमारेभे च विश्वपदार्थान् । प्रचचाल विवरणम्। उपत्रिंशा अर्था व्यक्रियन्त। अथाकस्मादुपरम्याऽचार्योऽपि पण्डितमण्डलीमाह्वयत— 'यावन्तोऽर्था अस्माभिः सम्प्रति प्रत्यपाद्यन्त, तावतः सर्वानप्यविकलमनुवक्तुं प्रभवति किं कोऽपि भवत्सु? यदि प्रभवति, अनूद्यताम् । ततो वयमप्यवशिष्टानर्थविशेषान् वर्णयामः' इति ॥

अहो, न कश्चिदपि विपश्चित् यथावदनुवदितुं प्रबभूव । सर्वोऽप्यनुवादे चस्खाल ॥

तदा निननादाऽचार्यमध्वः— 'एतावतामप्यर्थानां स्मर्तुमप्रभवतां भवतां पुरः किं शतस्यार्थानां समर्थनेन? यावती योग्यता तावती व्याख्या । अतः खलूक्त्वा' इति ॥

सर्वजनसमक्षं रहस्यार्थान् निजुगूहाऽचार्यः । अथाप्येकान्ते स्वान्तेवासिभिः साभिवादमभ्यर्थितः किमिति न कथयेत्? कथयेदेव । विववार किल विष्णुतीर्थाय निगूढमोङ्काररहस्यं यदन्येभ्यः स्वशिष्येभ्योऽपि न विववार ॥

अनेनाऽचार्यमध्व एतत् सन्दिदेशेव— अशक्यमेव सर्वेषां शतमर्था अनुसन्धातुम्, ऋते विशिष्टाधिकारिभ्य इति ॥

त्रयोऽर्था वेदानां जिज्ञास्येरन्, अपि ज्ञायेरन्। न दशार्था भारतस्य शतार्था वा विष्णुनामसहस्रस्य शक्यमवगन्तुम्। नापि नियतः सर्वेषामधिगमः। बहुज्ञा एव जानीयुरेतयोरर्थविशेषानिति। अन्येषां कतिपयार्थग्रहणेनैव सार्थकं भवत्युपासनम् । **'नभः पतन्त्यात्मसमं पतत्रिणः'** ॥

प्रकृतेऽस्मद्भिरचितायां नामचन्द्रिकायां प्रथमस्य विश्वशब्दस्य १२० अर्था निरूपिताः । अन्यत्र यथासम्भवं बहवोऽर्थाः । अनेनैव पथाऽन्यानप्यर्थान् पदवाक्यज्ञा अभ्यूहेरन्निति । यावन्तोऽर्था मनसि स्फुटतरं स्फुरन्ति न शक्यं तान् सर्वानपि ग्रन्थे निबन्द्धुम् । न युक्तं च सर्वेषामाविष्करणम् ॥

## कथं सहस्रं रूपाणि?

ननु सहस्रं रूपाणीत्युक्तम् । अस्ति काचित् तत्र संशीतेरवकाशः । दशावतारगतान्यपि रूपाण्यत्र व्यपदिश्यन्ते– महावराहः, नारसिंहवपुः, रामः, कृष्णः, देवकीनन्दनः, चाणूरान्ध्रनिसूदनः– इत्यादीनि । शक्येता-प्याद्यानां चतुर्णां रूपान्तरविवक्षया सङ्गमनम् । अथापि कथं देवकीनन्दनः इति, चाणूरान्ध्रनिसूदन इति । स्फुटमेते कृष्णावतारसम्बन्धिनी नामनी । कृष्णो ह्यष्टमोऽवतारो देवकीं नन्दयामास, चाणूरमन्ध्रं च निसूदयामास । तत् कथमत्र रूपान्तरविवक्षा?

कृष्ण इति सहस्रान्तर्गतमन्यद् रूपं स्यात् । अथापि न स देवकीतनयः, नापि स चाणूरान्ध्रनिसूदनः । तत्कथमनयो रूपसहस्रेऽन्तर्भावः? कथन्तरामनयो-र्नाम्नोर्नामसहस्रे?

सहजा पृच्छा । सहजं च वैयाकुल्यमुत्तरस्यालाभे । निमील्य चक्षुषी अन्तः किञ्चिद्विचिन्त्यताम् । तदा ज्ञायेत नात्र किञ्चिदसङ्गतमयुक्तं वेति ॥

'वासुदेवः' इत्यपि दशस्ववतारेष्वन्तर्गतस्य वसुदेवसुतस्य कृष्णस्य हि नामधेयम् । पुनस्तदेव नाम चतुर्विंशतिमूर्तिष्वेकस्यापि भवति । नामसहस्रे च तदेव त्रिः पठ्यते ॥

वासुदेव इति वसुदेवस्यायं सुत इति शतार्थेष्वेकोऽर्थः । अर्थान्तरविवक्षया तदेव रूपान्तरस्यापि नामधेयं भवति ॥

सर्वत्र वसन् देवो वासुदेव इत्यस्यां विवक्षायां सर्वाण्यपि रूपाणि वासु-देवनामानि । दशस्वेकोऽपि वासुदेवः । चतुर्मूर्तिष्वेकोऽपि । चतुर्विंशतिमू-र्तिष्वेकोऽपि । सहस्रमूर्तिष्वेकोऽपि ॥



संसारदशायामात्मानं वस्त आच्छादयतीति वासुः । मुक्तावात्मानं देवयति प्रकाशयतीति देवः । वसुश्चायं देवश्चेति वासुदेव इत्यर्थविवक्षायां चतुर्मूर्तिषु प्रथमस्येदं विशेषनामधेयं भवति । वसुदेवस्यायं सुत इत्यर्थविवक्षायां दश-रूपेष्वष्टमस्य कृष्णस्येदं विशेषनामधेयं भवति ॥

अन्यत्राप्ययमेव पन्थाः । देवक्या नन्दनः सुत इति चार्थानां शतकेऽय-मेकोऽर्थः । रूपान्तरविवक्षायामर्थान्तरं भवति ॥

देवं कायति गायतीति श्रुतिरपि देवकी । श्रुतिमानिनी प्रळये सर्ववेदपदैर्भगवन्तं गायन्ती लक्ष्मीरपि देवकी । तां नन्दयति, तया च श्रुतिवाचा भक्तान् नन्दयतीति विवक्षायां रूपान्तरस्यापीदं नामधेयं स्यात् । अथच सर्वरू-पाणामपि ॥

अन्यच्चेदमवश्यं स्मर्तव्यं साधनपथं पतद्भिः सात्विकैर्जनैः । विभिन्नकाले-ष्ववतारा भवन्ति । विभिन्नानि कार्याणि च कुर्वन्ति । विभिन्नानि रूपाणीव दृश्यन्ते च । वस्तुगत्या नावताराणां लेशतोऽपि भेदोऽस्ति । अत एक-स्मिन्नवतारे यत् कर्म कृतम्, यश्च महिमा प्रदर्शितः तत् सर्वमन्यस्मिन् रूपेऽपि चिन्त्येत । तेन देवक्यास्तनयीभूय तां नन्दयामासेत्यर्थोऽप्यत्र चिन्तनीय एव । शताधिकेष्वर्थेष्वयमपि किलैकोऽर्थः ॥

आचार्यकृतं स्तोत्रमिह निदर्शनं भवति–

**देवकिनन्दन नन्दकुमारा**
**वृन्दावनाञ्जन गोकुलचन्द्र ।**
**कन्दफलाशन सुन्दररूपा**
**नन्दितगोकुल वन्दितपाद ॥**

**इन्द्रसुतावक नन्दकहस्ता**
**चन्दनचर्चित सुन्दरिनाथ ।**
**इन्दिवरोदरदळनयना**
**मन्दरधारा गोविन्द वन्दे ॥**

अत्र देवकिनन्दनो मन्दरधारो बभूव । कृष्णः किल गोवर्धनं दधार, न मन्दरम् । कूर्मो दधार मन्दरम् । अथापि शास्त्ररीत्या चिन्तनविधाने, रूपाणामैक्यात् कृष्णोऽपि मन्दरधरः । कूर्मोऽपि गोवर्धनधरः ॥

अन्यच्चात्र विशेषणं गमनमर्हति– इन्द्रसुतावकेति । इदं विशेषतो रामावतारसम्बन्धि विशेषणम् । स हि ध्वाङ्क्षरूपेणाऽगतं जयन्तं नामेन्द्रसुतमाव । अथाप्यत्र कृष्ण इन्द्रसुतावको बभूव ॥

उभयमपि साधु– एकस्यैव गुणस्य सर्वरूपेष्वपि चिन्तनम्, अथच पृथग्रूपेषु पृथग्गुणानां चिन्तनं च । एकत्रानन्तरूपताचिन्तनम्, अपरत्रानन्तरूपेष्वेकरूपताचिन्तनम् ॥

अत्रैकमनन्तं भवति । अनन्तमेकं भवति ।

अत्र १ x १० = दश च, एकं च ।

१ x १०० = शतं च, एकं च ।

१ x १००० = सहस्रं च, एकं च ।

**'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' ॥**

✲

'चाणूरान्ध्रनिसूदनः' इत्यप्येवमेवानुसन्धातव्यं भवति । अन्ध्रदेशजातं चाणूरं नाम मल्लं निसूदितवानित्यर्थे कृष्णावतारस्य विशेषणम् । अर्थान्तरे रूपान्तरस्य विशेषनाम स्यात् । सर्वरूपाणां समानं वा नाम स्यात् ॥

एतत्पदनिर्वचने काचन समस्या बाधते विबुधानपि । चाणूरपदस्य का निर्वचनरीतिरिति । अस्य मूलधातुं वैयाकरणा विसस्मरुः । 'चण' इत्येत् पटुरित्यर्थे प्रयुज्यते– वचनचण इति । वचने पटुरित्यर्थः । अथापि न तत्र



चणधातुः, किन्तु चणप् प्रत्ययः । चनधातुरिव चणधातुरपि लोके विस्मृत एव । ततश्च धातुरन्तर्हितो बभूव । तेन समस्या प्रादुर्बभूव ॥

चनधातुर्वेदेषु पठ्यते– 'सुमतिश्चनिष्ठाः' इति । अथापि वैयाकरणा आचक्षते– 'चन' इति चायृधातोर्नक्प्रत्ययेन सम्पन्नं रूपमित्यङ्गीकुर्मः । न कथश्चन चनधातुम्– इति । एवं चणधातोरवस्थाऽपि । विस्मृतप्रतनधातुपाठा वैयाकरणा धातुविस्मृतिमपिधातुं प्रत्ययमुपस्थाप्य प्रत्याययितुमीहन्ते ॥

पूर्वं 'चण'धातुरपि नूनमासीत्, चण गताविति । तेन चणन्तीति चाणाश्चतुराः । यथा भाषायां 'ಜಾಣ' इति । तथाच वेदान्तविज्ञानचणाश्चाणा उच्यन्ते । तानूरीकुर्वन् चाणूरो भवति । अन्धायां श्रद्धायामेव रता अन्धरा एवान्ध्राः । अन्धरान् निसूदयन्नन्ध्रनिसूदनः । चाणूरश्चायमन्ध्रनिसूदनश्चेति चाणूरान्ध्रनिसूदनः ॥

अथच चिताः समुच्चिता अणवो जीवा एव भगवानिति य ऊरीकुर्वन्ति ते चाणूराः । अन्धा च तेषामियमेकत्वे रतिः । तेनान्ध्राः । तानेतान् चाणूरान्ध्रान् निसूदयन्नयं चाणूरान्ध्रनिसूदनो भवति । (चाणूरान्ध्रनिषूदन इति बहवः पठन्ति । अपपाठोऽयम् । निसूदन इत्येव साधु रूपम् ।)

एवं सर्वत्राप्यर्थान्तरगवेषणेन परिहरणीयेयं समस्या ॥

## किँलिङ्गो भगवान्?

अस्मिन् वैष्णवे नामसहस्रेऽन्यच्च वरिवस्यारहस्यमनुभूयते ॥

या देवता स्तूयते सा चेत् स्त्रीदेवता स्त्रीलिङ्गान्येव तत्र नामधेयानि भवन्ति । यथा ललितासहस्रनामादिषु । यदि पुन्देवता, पुंल्लिङ्गानि । यथा कृष्णाष्टोत्तरशतनामस्तोत्रादिषु ॥

वैष्णवे पुनरस्मिन् नामसहस्रे प्रथमं नामैव नपुंसकम् – विश्वम् । उपरिष्टादपि बहूनि नामधेयानि नपुंसि भवन्ति । तत्रतत्र स्त्रीलिङ्गनामानि च मुक्तानां परमा गतिरित्यादीनि । तत् कुत एतदेवम्?

अयुक्तोऽयमनुयोगः। इतरासु भाषासु यल्लिङ्गं वाच्यं भवति तँल्लिङ्गमेव वाचकं भवति। गैर्वाण्यां तु वाण्यां नैवम्। तत्र वाच्यलिङ्गता केवलं विशेषणानां भवति। विशेष्यं प्रायः स्वतन्त्रलिङ्गम्। लिङ्गस्य शब्दस्वभावत्वात्। पुञ्जननेऽप्यपत्यमित्युच्यते। स्त्रीजननेऽपि। नपुंसकत्वं शब्दस्वभावः। जातो वा स्यात्, जाता वा स्यात्, अपत्यं जातमित्याचक्षते ॥

स्त्र्येव किल जाया भवति। अथापि जायावाचकं पदमेकं नियतपुँल्लिङ्गं नियतबहुवचनं च पठन्ति 'दाराः' इति। कारणं स्फुटम्– संस्कृतभाषायां नार्थाधीनं लिङ्गम्, किन्तु शब्दस्वभाव इति। अन्यदेव वाच्यलिङ्गम्। अन्यदेव वाचकलिङ्गम्। तयोर्न कोऽप्यन्तःसम्बन्धः ॥

वास्तवमिदं विवरणम्। अथापि स्थूलम्। सत्यं वैयाकरणानां पक्षे नान्या गतिः। अध्यात्मवादिनामन्यदेव विवरणं भवति। इदमिह निगूढमुपासना-रहस्यम्–

यदा पदानि जगद्वाचकानि तदा नार्थलिङ्गयोः सम्बन्धः। यदा च तानि भगवद्वाचकानि तदा पुनरर्थवन्ति लिङ्गानि भवन्ति। तदा विज्ञायते व्यर्थोऽयं वैयाकरणानां स्वभाववाद इति ॥

यानि पुँल्लिङ्गानि पदानि तानि भगवतः पुंरूपवचनानि। स्त्रीलिङ्गानि स्त्रीरूपवचनानि। परमपुरुषः स एव मोहिनीरूपं किल बभार ॥

पुरुषेपुरुषे भगवान् बिम्बरूपः स्थितः, पुरुषो भूत्वा। स्त्रियांस्त्रियां भगवान् बिम्बरूपः स्थितः, स्त्री भूत्वा। **'रूपं रूपं प्रति रूपो बभूव'** ॥

तेन भगवान् पुमानपि योषिदपि। तेन सर्वाणि पुंल्लिङ्गपदानि स्त्रीलिङ्गपदानि च तमेव मुख्यतः प्रतिपादयन्ति। अथापि लौकिकप्रज्ञानुसारेण न भगवान् योषित्, नापि पुमान्। यतः पुरुषगता दोषास्तस्मिन्न सम्भवन्ति। नापि योषिद्गताः। तेन न स पुमान्, नापि योषित्। अतः श्रुतयस्तं नपुंसकपदेन व्यपदिशन्ति 'परं ब्रह्म' इति। स्त्रीपुंसयोर्दोषा अस्मिन्न सम्भवन्तीति। सर्वेषां नपुंसकनामपदानामयमेवाऽऽशयः ॥



केचिदाक्षते– पुरुषसूक्तवेद्यो भगवान्, जगतः पिता च। तस्मात् स पुमानेवेति। अन्ये पुनरन्यथा मन्यन्ते– जगन्माता ननु परदेवता, अतो योषिदेवेति। अपरे पुनर्विपरीतं रटन्ति– न देवो भगवान्। नापि भगवती देवी। लिङ्गातीतं हि परतत्वमिति ॥

सर्वेऽप्येते स्वपाण्डित्यं स्वशिरःकम्पेनैव मानयन्तो मन्दास्तुन्दपरिमृजाः। उत्पथं पतन्तो गम्यं जिगमिषन्ति। एतादृशानुपनिषदेवं परिचाययति– **'अविद्यायामन्तरे वेष्टयमानाः स्वयन्धीराः पण्डितम्मन्यमानाः'** इति ॥

तत्ववादिनस्तूभयवादिनः– भगवान् पुमानपि, योषिदपि। पिताऽपि माता-ऽपि। स्तुवन्ति च–**'त्वमेव माता च पिता त्वमेव'** इति। प्राकृतरूप-विवक्षया भगवान् मा भूत् पुमान् मा च स्त्री। अप्राकृतस्थितौ स नूनं पुंरूपोऽपि। स्त्रीरूपोऽपि। स विश्वरूपः। अत एव स विश्वम् ॥

नन्वथापि न निस्तारः। नपुंसकपदवाच्यो भगवान् किंरूपः? पुरुषरूप आहोस्वित् स्त्रीरूपः? उभयरूप इति गृहाण। तथाच यत् पुँल्लिङ्गपदवाच्यम्, तत् पुरुषरूपमेव। यथा विष्णुः। यत् स्त्रीलिङ्गपदवाच्यम्, तत् स्त्रीरूपमेव, यथा गायत्री। यथा मुक्तानां परमा गतिः। लक्ष्म्यन्तर्गतं स्त्रीरूपमिदम्। यन्नपुंसकपदवाच्यम्, तदुभयरूपम्। यथा विश्वम्, यथा ब्रह्म। पुरुषेषु विशत् पुरुषरूपम्। स्त्रीषु विशत् स्त्रीरूपं विश्वम्। एवं चित्प्रकृतिगतं ब्रह्म स्त्रीरूपम्। कालाकाशगतं पुंरूपम्। वेदवर्णगतानि कानिचित् स्त्रीरूपाणि, कानिचित् पुरुषरूपाणीति ॥

## कुतः प्रथमता विश्वनाम्नः?

अथापि न पर्यवसितः पर्यनुयोगः। अवशिष्यते पुनरेका पृच्छा। वैष्णवं नामसहस्रं विष्णुनाम्नैव प्रारम्भमर्हति– विष्णुर्विश्वं वषट्कार इति। तद् विहाय कुतो विश्वनाम्ना समारम्भ इति ॥

सन्ति बहूनि कारणानि। प्रथमं तावद् वेदसंवादः– **'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'** इति ॥

श्रुतिरियं नः श्रावयति– जागतानि सर्वाण्यपि नामानि तस्यैव हि नामानि गौणानि । न तत्पदं वर्णो वा नादो वाऽस्ति यन्न भगवन्तमभिधत्ते । यतः सर्वाणि नामानि तद्गुणान् गायन्तायं तमेव विशन्ति तेन तत् परं ब्रह्म विश्वमिति गीयते । एवं सहस्राण्यपि नामानि यद्विशन्ति तद्विश्वम् । यद् विश्वं स विष्णुरिति ॥

इदमुक्तं भवति– सर्वपदवाच्यत्वं हि विश्वपदार्थः । तेन तत्पदेनैव नामारम्भः समुचिततरः– विश्वं विष्णुरिति । सर्वपदवाच्यो विष्णुरित्येवोक्तं भवति ॥

✻

अथ द्वितीयं कारणम् । विष्णुशब्दव्याख्यानं चेदं विश्वमिति । निर्वचनैक्यात्– विशतीति विश्वम्, विशतीति विष्णुः ॥

विश्वस्मिन् विश्वे स्वयमन्तर्यामितया विशतीति भगवान् विश्वम् । अत एव स विष्णुरिति ॥

एवं सर्वपदवाच्यं विश्वम् । अतोऽपि च स विष्णुरिति । तथाच विष्णुशब्दार्थं विवृण्वद् विष्णुशब्दव्याख्यानरूपं विश्वशब्दं प्रथममुपस्थाप्य तेन द्वारेण सहस्रं नामान्यवगमयितुमियमानुपूर्वी ॥

✻

अन्यच्चोपासारहस्यमत्र तृतीयं कारणं भवति । जाग्रदवस्थाप्रेरकमकारवाच्यं विश्वनामकं रूपमपीहानुसन्धेयम् । विनायकस्य बिम्बरूपं च तत् । तस्य वैश्वानरापरनामधेयस्य विश्वरूपस्य मुखान्येकोनविंशतिः । पार्श्वयोः नवनव पुमाकाराणि मुखानि । मध्यमं तु गजाकारम् । तदुपासनेनैव विनायको वारणवक्त्रो बभूव । तत एव विघ्नवारणशक्तिं लेभे प्रथमपूजां च ॥

तेन विघ्नवारणाय वारणवदनो वैश्वानरः प्रथमं प्रस्तूयते विश्वं विष्णुरिति, विश्वाख्यं रूपमपि विष्णुरेवेत्यर्थः । एतदनुसन्धाय विश्वरूपो भगवान् प्रार्थ्यते– अयि जाग्रदवस्थाप्रेरक भगवन्, जागर्तु मे मनीषा तव नामानुसन्धाने । अयि वारणवदन वैश्वानर, निरन्तरायं निरन्तरं तव नामानि नृत्यन्तु मम रसनायाम् । विलसन्तु मम मनोमन्दिरे । साधनपथे मा कदाऽपि भूवन् प्रत्यूहनिवहा इति । अतो युक्तमुक्तम्– **'विश्वं विष्णुः'** इति । तदिदं तृतीयं कारणम् ॥



✻

अथच जातवेदसि गतः परशुरामोऽपि विश्वमिति वैश्वानर इति चोच्यते । 'विश्वरूपं हरिणं जातवेदसम्' इति हि श्रुतिः । स च वाचः शुद्धिकरः वाग्दोषहरश्च । स्मरन्ति च गायत्रीसंहितावचनम्–

> **'संहर्ता सर्वदोषाणामग्निस्थः सर्वदाहकः ।**
> **'नित्यानन्दोऽग्निवर्णश्च रामः परशुभृत् सदा'** इति ।

सोऽयमग्न्यन्तर्गतः परशुरामो मम रसनायामासीनः शुद्धां वाचमुच्चारयत्विति प्रार्थ्यते **'विश्वं विष्णुः'** इति । तदिदं तुरीयं कारणम् ॥

एतदुपासनारहस्यं नामवरिवस्यायामनुसन्धेयमितीयान् शब्दजालबन्धः । सपर्यापर्यायोऽयं भगवत्प्रीतिमापादयतीति ॥

वस्तुतस्तु व्यर्थेयं कारणजिज्ञासा । पुरैवागादि यदिमानि न केवलं विष्णोः सहस्रनामानि, विष्णोः सहस्ररूपाणां नामानीति । तेषु च सहस्ररूपेषु विश्वमिति प्रथमं रूपम् । विष्णुरिति द्वितीयम् । तत्र यत् प्रथमं तत् प्रथममुदितम् । द्वितीयं द्वितीयमिति काऽत्र पृच्छा?

✻

ननु तथाऽपि नोत्तीर्णः प्रश्नार्णवः । स्यादपि सा विवक्षा । अथापि विश्वो विष्णुरिति वक्तव्यम् । कुतोऽयं लिङ्गभङ्गः?

सत्यं विश्वो विष्णुरिति वक्तव्यम् । अथापि तथा वचने सर्वदोषविहीनत्वमनुदितमेव स्यात् । अत आह विश्वमिति । नपुंसकलिङ्गेन स्त्रीपुंसदोष-

विरहव्याजेन सर्वदोषविरहमेवाऽह । तेन विश्वं विष्णुरिति सर्वशब्द-वाच्यः, अथापि सर्वदोषहीनः, तत्तत्पदगदितगुणैरेव पूर्णो विष्णुरिति कथितं भवति । तेन लोके दोषवाचकान्यपि पदानि भगवति गुणवाचकान्येव भवन्तीति चोक्तं भवति । तद्यथा– दुःखी पराजित इत्यादि । लोके दुःखवान् दुःखीत्युच्यते । मुख्यतस्तु दुःखस्वामी दुःखिपदार्थः । दुःखयतीति हि दुःखी कथ्यते । तद्यथा धनस्वामी धनीत्युच्यते, न धनवान् । यतः स्वामिनो धनं तदनुगा एव वहन्ति, अथापि ते न धनवन्तः । स्वामित्वाभावात् ॥

एवं पराजित इत्याद्यपि । न पराजयवान् पराजितः । किन्तु पराजयस्वामी पराजितः । अन्तर्नीतणिजर्थश्चायम्– यः स्वापं प्रापयति स मुख्यतः सुप्तपदार्थः । यः पराजयं प्रापयति स मुख्यतः पराजितशब्दार्थः । तर्हि जितारिरेव पराजितः स्यात् । सत्यं भगवांस्तथा स्यात् । अन्येषु पराज-यसम्भवान्न गुणवचनमिदम् ॥

अपि च तत्तदन्तर्यामी स्वामी तच्छब्देन भण्यते । विश्वमिति नपुंसकं पदं जगद्वाचि । तदन्तर्यामी भगवान् मुख्यतो विश्वमित्युच्यते । पुंल्लिङ्गविश्व-पदप्रयोगे तस्य जगदन्तर्यामित्वम्, ततश्च नपुंसकविश्वपदवाच्यत्वं स्याद-नुक्तमेव । अतो युक्तं विश्वं विष्णुरिति ॥

अथच 'तदेव ब्रह्म परमं कवीनाम्' इति विशेष्यतया परमं ब्रह्म विश्वमिति प्रस्तूयते । तच्च परमं ब्रह्म विष्णुरेवेति विश्वं विष्णुरित्यवधार्यते । पठन्ति च साङ्कर्षणं सूत्रम्– **'विष्णुरेव हि तच्छ्रुतेः । तं ब्रह्मेत्याचक्षते'** । अत एव **'अथातो ब्रह्मजिज्ञासा'** इति सूत्रम्, **'विष्णुरेव विजिज्ञास्यः'** इति विवृतं सङ्ग्रहभाष्ये । **'ब्रह्मशब्दश्च विष्णावेव'** इति च भाष्यवचनम् । तदेतत् प्रमेयजातमवगमयितुं **'विश्वं विष्णुः'** इत्याह ॥

विश्वनामकस्य रूपस्योभयलिङ्गत्वाद् विश्वमित्येव निर्देश्यमिति च पूर्वमा-वेदितम् । उपासनाविशेषार्थं च पूर्वमुदितानि विवरणान्यर्थवन्ति भवन्ति ॥





तस्यास्य स्तोत्रराजस्य भाष्यं नामचन्द्रिकाह्वमिह सतामुपहारीक्रियते । बहून् वत्सरान् भाष्यमिदमन्तःपेटिकायां निहितमासीत् । सम्प्रति सर्वेऽन्तराया अन्तरदधुस्तस्यैव सहस्रनामप्रतिपाद्यस्य भगवतोऽनुग्रहेण । विश्वनाम्ने विष्णवे केवलं भूयिष्ठं नमोवाकं प्रशास्महे ॥

**इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।**
**वितेने विमलां नामचन्द्रिकाभाष्यभूमिकाम् ॥**



# श्रीविष्णुसहस्रनामस्तोत्रम्

आचार्य्यगोविन्दविरचितया
नामचन्द्रिकाख्यया व्याख्यया सहितम् ।







ॐ

**वैशम्पायन उवाच–**

**श्रुत्वा धर्म्मानशेषेण पावनानि च सर्वशः ।**
**युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥**

नत्वा सहस्रनामानमनन्तगुणमच्युतम् ।
नाम्नां सहस्रं तद् विष्णोः किञ्चिदेव प्रपञ्च्यते ॥

लौकिकान् समाजधर्मान्, वैदिकान् सनातनधर्मांश्च । पावनानि तत्वविज्ञानानि । 'नहि ज्ञानेन सदृशं पवित्रम्' इत्युक्तत्वात् ॥ १ ॥

**युधिष्ठिरः–**

**किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।**
**स्तुवन्तः कं कमर्च्चन्तः प्राप्नुयुर्म्मानवाः शुभम् ॥ २ ॥**

एकं सर्वोत्तमम् । दैवतं देवतोत्तममेकं किमिति वा । लोकः समन्वितः शास्त्रसमुदयः । तदेव विधान्तरेण पृच्छति– किं वाऽप्येकम् । पराणामपि परं सर्वाधिकमयनं परा गतिः । यस्य त्रिकरणमाराधनं मोक्षान्तशुभफलं तत् सर्वाश्रयभूतं सर्वाधिकं तत्वं किंगुणकमुपास्यमिति समग्रप्रश्नार्थः ॥ २ ॥

**को धर्म्मः सर्वधर्म्माणां भवतः परमो मतः ।**
**किं जपन् मुच्यते जन्तुर्ज्जन्मसंसारबन्धनात् ॥ ३ ॥**

आराध्यः पृष्टः । आराधनं पृच्छति–को धर्मः । भवान् धर्मज्ञेषु परमो मतः । अतः को धर्मो भवतः परमो मतः । सन्तु नाम बहवो धर्माः । ‘यज्ञानां जपयज्ञोऽस्मि’ इति भगवतैव गदितत्वात् तमेव विशिष्य पृच्छामीत्याह– किं जपन् । पुनर्जन्मबन्धनात् । अनादिसंसारबन्धनात् ॥ ३ ॥

**भीष्मः–**

**जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।**
**स्तुवन् नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥**

जगत्प्रभुत्वं कथञ्चिद् देवेष्वपि गतम् । अयं तु देवानामपि देवः । अपि च सान्तं तेषां प्रभुत्वम् । अनन्तश्चायं देशतः कालतो गुणतः शक्तितश्च । कोऽयम्? पुरुषोत्तमम् । नारायणम् । प्रकृतेरपि परत्वमनेनैवोक्तम् । ‘अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः’ इति ह्युक्तम् । पुरुषः पुरु ब्रह्म सरन् साधकजीवः । न पुमानेवेति नियमः । ईशपदे मनःप्रावण्यमुत्थानम् । लोकचिन्तया विच्छेदविरहः सातत्यम् ॥ ४ ॥

**तमेव चार्चयन् नित्यं भक्त्या पुरुषमव्ययम् ।**
**ध्यायन् स्तुवन् नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥**

पुरुषमव्ययम् । क्षराक्षरपुरुषौ वीतः । अयं तु न व्येति । यजमानः पूजकः तमेव चार्चयन् पूजयन् । पूजा च त्रिभिः करणैरपीत्याह– तमेव ध्यायन् मनसा । स्तुवन् वचसा । नमस्यंश्च कायेन । एवकारेण पुरुषोत्तमत्वेनेतर-देवतापूजनं निराह । अनुमन्यते च परिवारतया चकारेण ॥ ५ ॥

**अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।**
**लोकाध्यक्षं स्तुवन् नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥**

स्वयमादिनिधनवर्जितः । अनस्याप्यादिनिधने येन । लोकानामीश्वरा ब्रह्माद्याः । अयं महेश्वरः । लोकानामधिक ईक्षिता लोकाध्यक्षः । उप-द्रष्टा । नामसहस्रेण स्तुवन् नित्यम् ॥ ६ ॥



**ब्रह्मण्यं सर्वधर्म्मज्ञं लोकानां कीर्त्तिवर्द्धनम् ।**
**लोकनाथं महद् भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥**

ब्रह्मण्यं वेदवेद्यम् । ये कीर्तयन्ति तेषां लोकानां कीर्तिवर्धनम् । लोकानां सर्व-धर्मज्ञमिति च । ‘एको विष्णुर्महद् भूतम्’ इति वक्ष्यति । भूतिमद् भूतम् । सर्वजीवानां भवः संसार उद्भवो मोक्षश्च येन । ब्रह्मण्यमित्यादि स्तुवन् सर्व-दुःखातिगो भवेत् ॥ ७ ॥

**एष मे सर्वधर्म्माणां धर्म्मोऽधिकतमो मतः ।**
**यद् भक्त्या पुण्डरीकाक्षं स्तवैरर्च्चेन्नरः सदा ॥ ८ ॥**

द्वितीयप्रश्नस्य विशिष्योत्तरम्– एष मे । स्तवैर्वक्ष्यमाणैः ॥ ८ ॥

**परमं यो महत् तेजः परमं यो महत् तपः ।**
**परमं यो महद् ब्रह्म परमं यः परायणम् ॥ ९ ॥**

पुनः प्रथमप्रश्नस्य विशिष्योत्तरं दददाराध्यमहत्त्वं सतात्पर्यं विवृण्वन् स्तवेषु श्रेष्ठं ते ब्रवीमीति प्रतिजानीते– परममित्यादिना पञ्चकेन । परमं सूर्यादि-भासकं तेजः । सूर्यादिभिरभासितं च । तपो ज्ञानरूपम् । महद् ब्रह्मेति भगवती श्रीः । अयं तु परममहद्ब्रह्म ॥ ९ ॥

**पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।**
**दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १० ॥**

अन्ये वियन्ति पितरः । अयमेकोऽव्ययः पिता । जनकः पाता च ॥ १० ॥

**यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।**
**यस्मिंश्च प्रळयं यान्ति पुनरेव युगक्षये ॥ ११ ॥**

कल्पादौ प्रथमयुगारम्भे कल्पान्ते च युगक्षये ॥ ११ ॥

**तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।**
**विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२ ॥**

लोकप्रधानस्य सर्वशास्त्रमुख्यार्थस्य । सर्वजीवलोकमुख्यपूज्यस्य वा । पापाद् भयम् । पापं च संसारभयं चेति वा ॥ १२ ॥

**यानि नामानि गौणानि विख्यातानि महात्मनः ।**
**ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३ ॥**

गौणानि गुणवाचकानि न केवलम्; विद्वत्सु ख्यातानि रूढानि च । ऋषिरिति मन्त्रे मन्त्रद्रष्टरि च पठ्यते । भूतये मोक्षान्तायै ॥ १३ ॥

***

**ओम् ॥ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।**
**भूतकृद् भूतभृद् भावो भूतात्मा भूतभावनः ॥ १४ ॥**

१. **विश्वम्–** विश्वं सर्वं पूर्णमित्येकार्थानि पदानि । विश्वं गुणैः पूर्णम् । 'विश्वनामा स भगवान् यतः पूर्णगुणः प्रभुः' इति हि स्मरन्ति (१) । विश्व इति वायुः । नियम्यतया सोऽस्यास्तीति विश्वम् (२) । विश्व इति जीवः । सोऽप्यनेन नियम्य इति विश्वम् (३) । विश्वमिति चराचरात्मकं जगत् । तदप्यनेन नियम्यमिति विश्वम् (४) । विश्वमिति सर्वम् । सर्वमप्यनेन नियम्यमिति विश्वम् (५) । विश्वरूपत्वाद् विश्वम् (६) । 'विवेश भूतानि चराचराणि' इति विश्वम् (७) । भूतान्यत्र विशन्तीति विश्वम् (८) । सर्वत्र विष्टं वं ज्ञानरूपं चेति विश्वम् (९) । विशेषेण श्वयतीति सर्वगतं विश्वम् (१०) । टु ओ श्वि गतिवृद्ध्योः । गतिरित्यवगतिश्च । तेन पूर्णज्ञानं विश्वम् (११) । नित्यवृद्धं च विश्वम् (१२) । विना पक्षिणा गरुडेन श्वयति गच्छतीति विश्वम् (१३) । भक्त्या विशिष्टानुद्धर्तुं श्वयति



धावतीति विश्वम् (१४) । भक्त्या विरहितान् दैत्यान् संहर्तुं श्वयति भूलोकेऽवतरतीति विश्वम् (१५) । विहायसि गतमिति विश्वम् । विष्णुपदं हि तत् (१६) । नानावतारेषु विविधानि रूपाणि गच्छ-तीति विश्वम् (१७) । वयः पक्षिणः वियति श्वयन्त्यनेनेति विश्वम् (१८) । वयः ज्ञानिनः श्वयन्ति अवगच्छन्त्यनेनेति विश्वम् (१९) । तेनावगमेन विविधं श्वयन्ति वर्धन्तेऽनेनेति विश्वम् (२०) । जडेभ्यो विशिष्टं चेतनजातं श्वयति चलत्यनेनेति विश्वम् (२१) । तत्रापि विलक्षणास्तरव ऊर्ध्वं वर्धन्तेऽनेनेति विश्वम् (२२) । चेतनगणाः श्वयन्त्यवगच्छन्त्यनेनेति विश्वम् (२३) विशिष्टं सर्वगुणैः श्वयन्ति जानन्ति ज्ञानिन एतदिति विश्वम् (२४) । सर्वतो विलक्षणं जानन्तीति विश्वम् (२५) । ज्ञानिनां मोक्षान्तं विविधं श्वाययतीति विश्वम् (२६) । विविधासु संसारगतिषु श्वाययति सञ्चारयतीति च विश्वम् (२७) । वीनां ज्ञानिनां शं मौक्तं सुखं वं अपरोक्षज्ञानं चानेनेति विश्वम् (२८) । सर्वेषां च चेतनानां विविधं तरतमभावोपेतं शं सुखं वं ज्ञानं चानेनेति विश्वम् (२९) । नित्य-संसारिणः त्रिदिवनिरयभूस्थानेषु विविधं सञ्चारयतीति विश्वम् (३०) । त्रिविधानां जीवानां विविधं तमः संसारो मुक्तिश्चेति त्रिविधं फलं गमयतीति विश्वम् (३१) । विशां प्रजानां वं ज्ञानमेतेनेति विश्वम् (३२) । वि अतिशयज्ञानरूपम्, 'तृतीयोऽतिशये' इत्यकारस्य इकारः, श्वं सर्वगतं चेति विश्वम् (३३) । जाग्रत्प्रवर्तनाय विशति दक्षिणाक्षीति विश्वम् (३४) । दक्षिणाक्षि विशन् वाययति ज्ञापयति बाह्यार्थानिति विश्वम् (३५) । स्वप्नप्रवर्तनाय मनस्यन्तर्विशतीति विश्वम् (३६) । मनस्यन्तर्विशन् ज्ञापयति स्वाप्नमर्थमिति विश्वम् (३७) । निद्रानियमनाय विशति हृदयमिति विश्वम् (३८) । हृदयं विशन् केवलानन्दमनुभावयतीति विश्वम् (३९) । जीवस्य निद्रया विलीनं श्वं ज्ञानमनेनेति विश्वम् (४०) । विशति जीवस्वरूपं

बिम्बतयेति विश्वम् (४१) । विशिष्टं शं सुखं वं ज्ञानं चास्येति विश्वम् (४२) । अत एव विलक्षणं शं च वं चास्येति विश्वम् (४३) । विशिष्टत्वाद् वि, ज्ञानानन्दरूपत्वात् श्वं चेति विश्वम् । 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इत्यभिदधति । 'विः पक्षि-परमात्मनोः' इति च (४४) । 'सर्वेशत्वात् सर्वगत्वात् सर्वस्य प्रभवाप्ययात् । सर्वस्य सर्वदा ज्ञानात् सर्वमेनं प्रचक्षते' इति स्मरणात् विश्वेशत्वाद् विश्वम् (४५ ) । विश्वस्मिन् व्याप्तत्वाद् विश्वम् (४६) । विश्वप्रभवत्वाद् विश्वम् (४७) । विश्वाप्ययहेतुत्वाद् विश्वम् (४८) । विश्वज्ञत्वाद् विश्वम् (४९) । विश्वान्तर्यामित्वाच्च विश्वम् (५०) । 'सर्वं ह्येतद् ब्रह्म' इत्युक्त्वा स्वयमेवोपनिषत् कृपया स्ववचनं व्याचख्यौ– 'एष सर्वज्ञ एष सर्वेश्वरः एषोऽन्तर्यामी । एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्' इति । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति च गीतासु । वीनां ज्ञानिनां विशिष्टं ज्ञानं सुखं चानेनेति विश्वम् (५१) । विविधं श्वं चरं जगदस्य लीलासृष्टिरिति विश्वम् (५२) । विगतश्वं गतिविरहितमचरं जगदप्यस्येति विश्वम् (५३) । न श्वयति न कर्मणा वर्द्धत इति विश्वम् (५४) । विश्वं स्वतो निश्चलम् (५५) । अथापि विविधरूपैः विविधं विचित्रं च श्वयति चलतीति विश्वम् (५६) । वेति गच्छति जीवजातमन्तर्यामितया, गत्वा च श्वाययति अवगमयति विषयजातमिति विश्वम् (५७) । वेति वर्धयति चेति विश्वम् । 'वी गतिप्रजनकान्त्यसनखादनेषु' इति धातुपाठः (५८) । आदौ गर्भं विशति जीवमादायेति विश्वम् (५९) । विष्टः सन्नादौ वेति जनयति अन्ते श्वयति देहाद् गच्छति जीवमादायेति विश्वम् (६०) । वेति जनयति विश्वमिति विश्वम् । लोपः समाने (६१) वेति कमनीयो भवति श्वाभ्यां ज्ञानानन्दाभ्या-मिति विश्वम् (६२) । कान्तिरिच्छा । तेन विरितीच्छा । विना स्वेच्छया श्वयति चरति भुव्यवतीर्येति विश्वम् (६३) । वं बलम् ।



इरिच्छा । श्वं क्रिया । तत्स्वरूपत्वाद् विश्वम् । 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिः (६४) । सज्जीवेषु वेति अस्यति स्थापयति शं वं चेति विश्वम् (६५) । असत्सु अस्यति निरस्यति चेति विश्वम् (६६) । अन्ते वेति खादति विश्वम्, सर्गे पुनः श्वाययति बहिर्गमयति चेति विश्वम् (६७) । एवं श्वाययति पालनेन वर्धयति चेति विश्वम् (६८) । विना इच्छया श्वाययति चारयति जगदिति विश्वम् (६९) । विना स्वेच्छया श्वयति चरति वनाद् वनं रामावतार इति विश्वम् (७०) । विना स्वेच्छया चरति वृन्दावने गोपगोभिः सहेति विश्वम् (७१) । नवनीतं खादन् गोकुले ववृध इति विश्वम् (७२) । विषु पक्षिषु चरतीति विश्वम् (७३) । विषु ज्ञानिषु तेषां हृदये चरतीति विश्वम् (७४) । अर्जुनादिषु विशन् वाति चरतीति विश्वम् (७५) । विशन् वाययति चालयतीति विश्वम् (७६) । वा गतिगन्धनयोः । गन्धनं मर्दनम् । विशन् वाति मर्दयति दुष्टान् दोषांश्चेति विश्वम् (७७) । विशति वायुमिति विश्वम् (७८) । सात्विकानां वं ज्ञानं विशति ज्ञानविषयो भवतीति विश्वम् (७९) । बलिनां वं बलं विशतीति विश्वम् (८०) । विं ज्ञानं श्यति तनूकरोति केषाञ्चित् वर्धयति केषाञ्चिदिति विश्वम् (८१) । विनां ज्ञानिनां शं सुखं वर्धयतीति विश्वम् (८२) । विशां वधकर्तृत्वाद् विश्वम् (८३) । विशां वर्धनाद् विश्वम् (८४) । विभिर्विशिष्टै-स्तत्वमानिभिः श्वाययति पुण्यं च पापं चेति विश्वम् (८५) । पुण्यविशिष्टान् पुण्यं लोकं गमयतीति विश्वम् (८६) । पुण्य-विहीनान् पापं लोकं गमयतीति विश्वम् (८७) । प्रकृतिं विकृतिं गमयतीति विश्वम् (८८) । विधिं सर्वचेतनेभ्योऽधिकं वर्धयतीति विश्वम् (८९) । वेति मत्स्यादिरूपेण आत्मानं जनयति, तेन दुष्टान् श्यति तनूकरोति, वर्धयति च सज्जनानिति विश्वम् (९०) । विशं विशिष्टं सुखं मोक्षे वाययतीति विश्वम् (९१) । विकृतानां शं वेति

अत्ति नाशयतीति विश्वम् (९२) । विशिष्टं विलक्षणं सुखमत्ति अनुभवतीति विश्वम् (९३) । विशोऽन्ते खादति संहरतीति विश्वम् (९४) । विज्ञानेन श्वयन्ति गच्छन्त्येनदिति विश्वम् (९५) । विज्ञानं श्वाययति गमयतीति विश्वम् (९६) । विज्ञानं वर्धयतीति विश्वम् (९७) । वेति जनयति श्वाययति वर्धयति चेति विश्वम् (९८) । विलक्षणमनन्तं सुखं वाति गच्छतीति विश्वम् (९९) । विश्वयति विवर्धते मत्स्यरूपेणेति विश्वम् (१००) विवर्धते वराहरूपेणेति विश्वम् (१०१) । विभिद्य स्तम्भं श्वयति निर्गच्छति नृसिंहरूपेणेति विश्वम् (१०२) । वं जलमिच्छया श्वयति कूर्मरूपेणेति विश्वम् (१०३) । विना त्रिपदमितभूमीच्छया गच्छति वामनात्मनेति विश्वम् (१०४) ततस्त्रिविक्रमात्मना विभिद्याण्डं वर्धत इति विश्वम् (१०५) । मोहिनीरूपेण दैत्यान् वञ्चयित्वा तेषां विशं सुखविपरीतं दुःखं वाययतीति विश्वम् (१०६) । विविधा रुजः शमयन् वाति धन्वन्तरिरूपेणेति विश्वम् (१०७) । विगतं प्रजानां शं येभ्यस्ते विशाः प्रजापीडकाः क्षत्रियाः । तान् वेति अत्ति नाशयति भार्गवात्मनेति विश्वम् (१०८) । रामात्मना रघुकुलं विवर्धयतीति विश्वम् (१०९) रावणं विहत्य विभीषणं वर्धयतीति विश्वम् (११०) । कृष्णात्मना यदुकुलं विवर्धयतीति विश्वम् (१११) । गोकुलं विवर्धयतीति विश्वम् (११२) । विदुरं विशिष्यानुगृह्णन्, तद्गृहं विशन्, तं वर्धयतीति विश्वम् (११३) । विगतश्वं विगतज्ञानं दुर्जनं चकार बुद्धात्मनेति विश्वम् (११४) । विं परमात्मानं श्यन्ति तनूकुर्वन्ति ये तान् म्लेच्छान् वेति नाशयति कल्क्यात्मनेति विश्वम् (११५) । विविधैरवतारैः वर्धयति धर्मं धार्मिकांश्चेति विश्वम् (११६) । विगमयति अधर्मम-धार्मिकांश्चेति विश्वम् (११७) । व्यस्य वेदं वर्धयति ज्ञानं व्यासात्मनेति विश्वम् (११८) । विना ज्ञानेन वर्धयति शमिति दत्तकपिलादिर्ज्ञान-कार्यो भगवान् विश्वम् (११९) । एवमादिरूपेण विविधं ज्ञानिभिर-वगतमिति विश्वम् (१२०) ॥



एवमनुसन्दधताममिता अर्थाः परिस्फुरन्ति । भगवतोऽनन्तैरवतारैः सह सरणादेकैकमपि सहस्रं नाम । दिङ्मात्रदर्शनार्थं दशावतारपरतया व्याख्यातम् । अनेनैव नयेनान्येऽप्यवतारा यथासम्भवमनुसन्धेया भवन्ति ॥

ननु 'विष्णुर्विश्वम्–' इति वक्तव्यम् । सत्यम् । स्यात् तथा वक्तव्यम् । अर्थविशेषद्योतनाय तथा नोक्तम् । कोऽर्थविशेषः? शृणु । विश्वमिति एकोनविंशतिमुखो मध्ये गजमुखो विश्वोऽपि विवक्षितः । स किल गणपत्यन्त-र्गतः सन् विघ्नविनिवारक इत्यादौ स एव प्रस्तूयते । विं विघ्नं श्वयति गमयति अपगमयति चेति विश्वमिति ॥

तर्हि विश्वो विष्णुरिति वक्तव्यम् । स्यात् तथा वक्तव्यम् । विवक्षा तु न पूर्यते । का विवक्षा? स्त्रीपुन्दोषविहीनत्वात् विश्व एव नपुंसकपदेन विश्वमिति व्यवह्रियत इति । तथा विश्वमिति जगद्वाचि पदं यथा भगवद्वाचि स्यात् । अथापि स पुरुषसूक्तप्रतिपाद्यः पुंरूप इति विष्णुरित्याह । सैव हि परदेवता स्त्रीरूपा चेति मुक्तानाम्परमागतिरित्याद्याह । एवमुत्तरत्रापि लिङ्गव्यवस्था ॥

२. **विष्णुः**–विशतीति विष्णुः । 'विश प्रवेशने' । वेवेष्टीति विष्णुः । विष्लृ व्याप्तौ । 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायण स्थितः' इति नारा-यणोपनिषत् । विशिष्टबलप्राणश्च विष्णुः । 'णकारो बलम् । षकारः प्राण आत्मा' इत्यैतरेयी श्रुतिः । 'वी गतिप्रजनकान्त्यसनखादनेषु' । वेति सर्वत्र गच्छतीति विष्णुः । सर्वमवगच्छतीति विष्णुः । ज्ञानिभिरवगम्यते चेति विष्णुः । सर्वं जनयतीति विष्णुः । भूतैः सहाऽत्मानं बहुधा जनयतीति विष्णुः । सर्वकमनीयत्वाद् विष्णुः । कान्तिरिच्छा च । सत्यसङ्कल्पत्वात् सर्वेष्टत्वाच्च विष्णुः । असनं प्रेरणं स्थापनं च । सर्वप्रेरणाद् विष्णुः । सर्वस्य तत्तत्स्थानेषु स्थापनाद् विष्णुः । दैत्यनिरसनाद् विष्णुः । अन्ते विश्वग्रासाच्च विष्णुः । यः विशतीति विश्वमित्युक्तः स विष्णुरिति धार्यताम् । तमेव हि विष्णुमाचक्षते । 'शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं

ध्यायेत् सर्वविघ्नोपशान्तये' इति च । विशिष्य शशिवर्णं हि विश्वमुच्यते। अथापि पुरुषोत्तम इति पुंपदेनाऽह विष्णुरिति। अथ च विषणुर्विष्णुरुच्यते। षळक्षरो हि विष्णुमंत्रः। संसारविषं नुदतीति विषणुर्विष्णुः। विं विद्यामात्मानं वा सनोतीति च। अधिकमुपरि (२५९; ६६१) ॥

३. **वषट्कारः–**वषडिति यज्ञेष्वाकार्य हूयत इति वषट्कारः। वष्टीति वषट्। सर्वकर्तृत्वात् कारः। इच्छारूपः सर्वकारणं च। वान्तीति वाश्चेतनानि तेषां षट् भावविकारा अनेनेति वषट्। सर्वगतः षड्गुणात्मा च वषट्। वषडित्याक्रियत इति वषट्कारः। वसन्तादीन् षड्तून् करोतीति वषट्कारः ॥

४. **भूतभव्यभवत्प्रभुः–**भूतानां भविष्यतां भवतां च प्रभुः। भूतः भव्यः भवंश्च प्रभुः। 'तस्योपव्याख्यानं भूतं भवद् भविष्यदिति' इति माण्डूकोपनिषत् ॥

५. **भूतकृत्–**भूतानि जीवजातानि करोति सृजति, कृन्तति संहरति चेति भूतकृत्। सात्विकजीवान् भूतान् भूतिमतः करोति। भूतानि वेताळादीनि करोति कृन्तति च। पञ्चभूतानि करोति सृजतीति च। सतामसतां च भुवि ततिं करोतीति च। असतां भुवि ततिं कृन्ततीति च स्वयं महद् भूतम्, सर्वकृच्च ॥

६. **भूतभृत्–**भूतानि एष बिभर्ति, भूतानि चैनं बिभ्रतीति भूतभृत्।

७. **भावः–**निर्दुष्टो भवति, आनन्दरूपश्च भवतीति भावः। 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचिनः' इति हि स्मरन्ति। 'सत्वं निर्दोषत्वं' इति च तत्वप्रदीपे। भाति अवति चेति भावः। भकारस्य अष्टाविंशतिरर्थाः भाष्यकारोक्ताः। सर्वेऽप्यत्रानुसन्धेयाः। अधिकमस्मत्कृतायां नाममालायां द्रष्टव्यम्। अवतिश्चानेकार्थः। रक्षणे, प्रवेशे, गतौ, अवगतौ, व्याप्तौ, वधे, विभागे च मुख्यतः पठन्ति ॥



८. **भूतात्मा–**भूतः भूतिमानात्मा स्वरूपमस्य। भूतश्चायमात्मा। भूतिमन्तश्चानेन सर्व आत्मानः। भूतेष्वाततश्चायम्। भूतान्यत्ति चायम्। सृष्टिविस्ताराय भूतान्यादत्ते चायम्। भूतानामात्मा अन्तर्यामी चायम्। सर्वेषामाश्रयत्वाद् भूमत्वाच्च भूश्चायं ततत्वात् तश्चायमात्मा स्वामी चायमिति भूतात्मा। 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इति ह्युक्तम् ॥

९. **भूतभावनः–**भूतानि भावयतीति भूतभावनः। 'सृष्टिः स्थितिश्च संहारो भावनेत्यभिधीयते' इति हि स्मरन्ति। भूतानां भावं नयति च। भूतैर्मनसा भावनीयश्च। भूतश्च भावनश्च। भूश्च तश्च भश्चावनश्च। अश्च वननीयत्वाद्वनश्च वा। अवनादवः। नेतृत्वान्नश्च वा। बुद्धरूपश्च सर्वनिषेधान्न उच्यते ॥ १४ ॥

**पूतात्मा परमात्मा च मुक्तानाम्परमागतिः।**
**अव्ययः पुरषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ १५ ॥**

१०. **पूतात्मा–**पूतः दोषरहितः त्रिगुणातीतश्च आत्मा स्वरूपमस्य। पूतश्चायमात्मा। पूताश्चानेन सर्वेऽप्यात्मानः। पूतान्याप्नोति चायम्। पूतान् पूतानि चाऽदत्ते चायम्। पूतानामात्माऽन्तर्यामी चायम्। पूतेषु चाऽत्मा मनोऽस्य। पूर्णः ततश्चायमात्मा ॥

११. **परमात्मा–**सर्वपरमाणां ब्रह्मादीनामात्मा। परमश्चायमात्मा। परा मा येषां ते परमाः। स्वयं च माया अपि परः। पान्तीति पाः लोकपाला ब्रह्मादयः। तेषां रमायाश्चायमात्मा। परविषया प्रमा येषां ते परमाः। परमाश्चानेन सर्वेऽप्यात्मानः। परमानप्यत्ति चायम्। परेषां तामसानां प्रमां चायमत्ति। परांश्च तामसानयं मा आदत्ते नाऽदत्त इति च परमात्मा। पाति रमते चायमात्मा। परश्च मश्च ज्ञानरूपश्चायमात्मा ॥

१२. **मुक्तानां परमा गतिः**–मुक्तानां परमा गतिः परमं गम्यम् । स्त्रियोऽपि मुक्तौ भवन्ति । तासां बिम्बभूतोऽयं स्त्रीरूपश्चोपास्य इति स्त्रीलिङ्ग-नाम्नोपस्तौति । अथ च मुक्तानाम्परमागतिरित्येकं पदम् । नाम्नां हि लोके प्राय ऐकपद्यं भवति । धनस्वामीति नाम कुर्वते । न तु धनानां स्वामीति । तथा चायमर्थः । मुक्तानां जीवानां परं केवलं आगतिरेव मुक्तिं प्रति, नतु ततो निर्गतिः येन स मुक्तानाम्परमागतिः । षष्ठ्या अलुक् । मुक्तानामपि परा या मा रमा तस्या अप्ययं गतिः । मुक्तानां परमाद् वैकुण्ठात्  अगतिः,अनिवर्तनं यस्मात् । मुक्तानामप्यना चेष्टयित्री सरस्वती । तां मुक्तानां पातीति मुक्तानाम्पो वायुः । अलुक् । अवधारणे वा बिन्दुः । तस्य च रमायाश्च गतिः । मुक्ताना वा रमा । तस्या अपि परमा गतिः । 'तीत्यानन्दः समुद्दिष्टः' इति वचनादगतिरिति नित्यानन्द उच्यते । परमा अगतिः नित्यः परमानन्दः येन स परमागतिः । मुक्तानामनश्च, अम् अन्तकश्च, परमश्च, न विद्यते गतिरन्य आश्रयोऽस्येत्यगतिश्चेत्यादि ॥

१३. **अव्ययः**– न विनाशमेति न विकारमयते । अवतीत्यविः । अयते सर्वत्रेत्ययः । अविश्चायमयश्च । अश्चायं विश्चायं अयश्च । 'अः इति ब्रह्म' इत्यैतरेये । हृदयगुहायामव्यः अवनीयश्चायं यश्च । सर्वगतश्च सर्वज्ञश्च यः । विना पक्षिणा अयत इति व्ययः । अश्चासौ व्ययश्च । अवयः अज्ञानिनोऽपि अयन्ते ज्ञानवन्तो भवन्त्यनेन । अवनादवयो ब्रह्माद्याः । तेऽप्येनं मुक्तावयन्ते । तेषामयः शुभावहोऽयम् । या गतावित्यतोऽयोऽज्ञानम् । न विद्यते वीनां विशिष्टानां सतां अयोऽज्ञानं यस्मादित्यव्ययः । अव्यमवनीयं यं ज्ञानं यद्विषयं सोऽव्ययः । अव्यः यो वायुर्यस्य । अव्ययान्यपि पदानि वाचकान्यस्येति चाव्ययः ॥

१४. **पुरुषः**–पुरि शेते पुरुषः । पुरु च सः । पुरा च सः । परं च सहते । 'परं विषहते यस्मात् तस्मात् पुरुष उच्यते' इति हि स्मरन्ति । पुरुषु ब्रह्मादिषु च सीदति । पुरून् पुरुषार्थान् सनोति । पुरूनप्यन्ते साद-यति । पुरुषु शब्दराशिषु वाच्यतया सीदति । सात्विकान् पुनाति,



राजसान् मुक्तिपथाद् रुणद्धि, तामसान् स्यति नाशयतीति पुरुषः । षोऽन्तकर्मणि । पुरुभिः देवैः सह सरति । पुरूनपि स्यति । अधिकं द्वितीयरूपे (४०७) ॥

१५. **साक्षी**–साक्षात् सर्वमीक्षत इति साक्षी । सारत्वात् सः । सर्वमक्षयमस्येत्यक्षी । सचासौ स च साक्षी । अक्षाण्यस्य संतीति वाऽक्षी । अक्षीणश्चायम् । साक्षा जीवाः । तेषामयं स्वामी । सारश्च अश्च क्षकारवान् नृसिंहात्मा चेति च साक्षी ॥

१६. **क्षेत्रज्ञः**–क्षेत्रं पिण्डाण्डं च ब्रह्माण्डं च जानात्ययमेक इति क्षेत्रज्ञः । 'क्षेत्रज्ञं चापि मां विद्धि' इति गीतायाम् । क्षपयति, इच्छया त्रायते, ज्ञापयति, ज्ञायते, सर्वं जानाति चेति क्षेत्रज्ञः । सर्वस्य क्षितिरिति क्षेत्रम् । सर्वं ज्ञपयतीति ज्ञः । क्षेत्रे ज्ञो जीवोऽनेनेति क्षेत्रज्ञः ॥

१७. **अक्षरः**–यः क्षेत्रज्ञः सन् क्षेत्रस्थः स एव अक्षरश्च । क्षेत्रस्य क्षरणेऽपि स्वयं न क्षरतीति । क्षर विनाशे । न केवलं क्षेत्रस्थ एव । किन्तु अश्नुते व्याप्नोति सर्वमित्यक्षरश्च । अशु व्याप्तौ । अधिकं क्षरतीति चाक्षरः । क्षर सन्ततदाने । अक्षेषु रमते च । अक्षमक्षयं लोकं राति ददाति च । अतीतक्षराक्षरत्वादः । अपगतदोषत्वादः । अनन्तगुण-त्वादः । सर्वाश्रयत्वात् सर्वक्षपणाच्च  क्षः । दोषकर्षणाच्च क्षः । रतिरूपत्वाद् रः । आ अकारात् आ क्षकारं सर्ववर्णेषु वाच्यतया रमत इति चाक्षरः । अत उच्यते– एवचादिसर्वाव्ययवाच्यश्चायमिति । सर्वाक्षरवाच्यश्चायमिति । अत एव अव्यय इत्यारभ्य अक्षर इत्युपसंहृत्य 'एव च' इत्याह । 'ए' इति स्वराणामुपलक्षणम् । वकारो यादिक्षान्तानां व्यापकाक्षराणाम् । चकारः पञ्चवर्गीयाक्षराणाम् । अजः सन्निच्छया सर्वं वर्तयन् 'एव' । अधिकेष्ट इति ए । सर्वज्ञत्वात् सर्वगतत्वाद्वा व ।  ए अकारवाच्ये स्वस्मिन्नेव वर्तमानः प्रतिष्ठित इति च । गुणैश्चितत्वात् 'च' ।  जीवैः समुचितत्वाच्च मोक्षेऽपि ॥ १५ ॥

**योगो योगविदान्नेता प्रधानपुरुषेश्वरः ।**
**नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ १६ ॥**

१८. **योगः–**युज्यते मनसि योगिभिरिति योगः । सर्वपुरुषार्थैर्युज्यन्ते साधका अनेनेति च । अयमेव योगः सर्वपुरुषार्थप्राप्त्युपाय इति च । येन वायुना उच्चैर्गीयते सामभिरिति योगः । यातीति यश्च उपरिगतश्च । येन वायुना उना शम्भुना चायं गम्यते गीयते वा ॥

१९. **योगविदान्नेता–**योगं पुरुषार्थोपायं विदन्ति ये तेषामयं नेता । ऐकपद्येऽलुक् । अथ च योगविदा योगविद्या । तामयं नयति । योगविच्च, अश्च, अम् अन्तकश्च, नेता च ॥

२०. **प्रधानपुरुषेश्वरः–**प्रधानमानिन्याः रमायाः, पुरुषमानिनश्चतुर्मुखस्य चायमीश्वरः । प्रधानपदोपलक्षितस्य अचेतनस्य पुरुषस्य चेतनस्य चायमीश्वरः । क्षरपुरुषेषु प्रधानो ब्रह्मा तस्यायमीश्वरः । अथ च प्रधानः पुरुष इत्यक्षरपुरुषः । लक्ष्मीः । तस्या अयमीश्वरः । स्वयं सर्वप्रधानः । क्षराक्षरपुरुषेश्वरश्च । अथ च स्वयं प्रधानपुरुषः । ईश्वरश्च सर्वपुरुषाणामयम् । ईशानामपि वरश्चायम् । प्रधानश्चायं पुरुषश्चाय-मीश्वरश्चायमिति ॥

२१. **नारसिंहवपुः–**अर्धं नरस्येव, अर्धं सिंहस्येवेति नारसिंहमस्य वपुः । नराणामिदमज्ञानं नारम् । तत् हिनस्ति सिंहतीति वा नारसिंहं वपुरस्य । षिहि हिंसायाम् । नरसमुदायं प्रळये संहरतीति च तादृशं वपुरस्य । नरेषु गतश्चायं नारः । सर्वसंहनानात् सिंहः । नराणां वं ज्ञानं पुष्णातीति वपुश्चायम् ॥

२२. **श्रीमान्–**अङ्कं श्रिता श्रीरस्येति श्रीमान् । श्रीवत्सत्वाच्च श्रीमान् । शीर्षणि श्रिताः इति श्रियः पञ्चदेवताः, चक्षुः श्रोत्रं मनो वाक् प्राण इति । चक्षुरिति सूर्यः । श्रोत्रमिति चन्द्रमाः । मित्रयमवरुणकुबेराश्च ।



मन इति गरुडशेषरुद्राः, इन्द्रकामौ च । वागित्यग्निः । प्राण इति मध्यमः प्राणः । 'ता वा एताः शीर्षन् श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः' इति श्रुतेः । ता नियमयन् श्रीमान् । सौंदर्यसारश्च श्रीमान् । वेदान् विदन्, वेदैर्वेद्यश्च श्रीमान् । 'ऋचो यजूंषि सामानि । सा हि श्रीरमृता सताम्' इति श्रुतेः । सर्वसम्पदां पदत्वाच्च श्रीमान् । शंरूपे ब्रह्मणि वायौ वा रतेः श्रीरिति सरस्वती भारती वा । साऽस्य वधूरिति श्रीमान् । श्रीरिति द्रौपदी । साऽस्त्यस्य दुष्टहन-नाङ्गत्वेनेति श्रीमान् । अधिकमुपरिष्टात् (१७८;२२१;६१७) ॥

२३. **केशवः–** प्रकीर्णाः कुन्तलाः परितोमुखमस्येति प्रशस्तकेशवान् केशवः । अवतारार्थं वितीर्णशुक्लकृष्णकेशवानिति केशवः । सूर्यकिरणाः केशा उच्यंते । तेषु वर्तमानोऽयं जगद् वर्तयति । कश्च ईशश्च केशौ ब्रह्मरुद्रौ, सृष्टिसंहारयोर्वर्तयतीति च । कृष्णरूपेण केशिनं हतवानिति च । अधिकं तूपरि (६५२) ॥

२४. **पुरुषोत्तमः–**क्षराक्षरपुरुषाभ्यामुत्तमः । उत्तमश्चायं पुरुषः । पुरुषेषु चायमुत्तमः ॥ १६ ॥

**सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।**
**सम्भवो भावनो भर्त्ता प्रभवः प्रभुरीश्वरः ॥ १७ ॥**

२५. **सर्वः–**सर्वस्य प्रभवाप्ययाभ्यां सर्वः । सर्वज्ञत्वात् सर्वः । सर्वगत्वात् सर्वः। सर्वगुणपूर्णत्वात् सर्वः । सर्वेश्वरत्वात् सर्वः । सरति वाति चेति सर्वः । 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इति स्मृतिः । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति च गीतासु । 'एष सर्वज्ञः । एष सर्वेश्वरः । एषोऽन्तर्यामी । एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्' इति च श्रुतिः ॥

२६. **शर्वः–**शिवे गतः शृणाति संहरतीति शर्वः । असतां शं रुणद्धीति च । 'शर्वः शंरोधनाद्धरिः' इति च स्मरन्ति । शरं शरीरं जीवं वा

वर्तयतीति च। 'शरो ह्यात्मा–' इति श्रुतेः। सुखक्रीडाज्ञानरूपत्वाच्च शरव एव शर्वः ॥

२७. **शिवः–**शिवगतः शिवस्यापि शिवतां ददच्छिवः। 'यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत्' इति भागवते। शयानो याति सर्वतः इति शिवः। शिन आनंदिनो वर्तयन् शिवः। शमेव शि। तृतीयोऽतिशये। अतिशयानन्दः ज्ञानरूपश्च शिवः ॥

२८. **स्थाणुः–** स्थिरत्वात् स्थाणुः। अणुषु जीवेषु तिष्ठन् अणोरणीयान् स्थाणुः। स्थिरानप्याणयति चालयतीति च। स्थाणौ शिवे गतत्वाच्च स्थाणुः ॥

२९. **भूतादिः–**भूतानां भूतिमतां जीवानामादानाद् भूतादिः। पञ्चभूतानामादिः कारणम्। तानि च सृष्टिविकासार्थमादत्ते। अन्ते च भूतान्यत्ति। भूतानां जीवानामादिः कारणम्, आदाता च, संहर्ता च ॥

३०. **निधिरव्ययः–**प्रळये सर्वं नष्टाकारमत्र निधीयते। अथापि स्वयं न व्येति। भक्तानामव्ययो निधिः शेवधिः। अथ च नामत्वादैकपद्ये निधिषु रताः निधिराः। तान् निधिव्ययेन दण्डयन् निधिरव्ययः। विद्याख्ये निधौ रता ये वयो ज्ञानिनस्तानयमयते, ते चैनमयन्ते। अथ च तेजसां निधिं रविमयत इति निधिरव्ययः। सतां निधिश्चायम्, रवन्ते वेदा एनमिति रविश्चायम्, अयः शुभावहश्चायमिति च ॥

३१. **सम्भवः–** सम्भवति जगदस्मादिति सम्भवः। स्वयं च धर्मसंस्थापनाय स्वेच्छया सम्भवति। मुक्ताः सम्यग् भवन्त्यानन्दरूपा अनेन। सम्पूर्णत्वात् सम्। आनन्दरूपत्वात् भवश्च। सम्यग् भाति ज्ञानरूपतयेति च सम्भवः। समग्रत्वात् सम्। भातीति भः। वातीति वश्च ॥

३२. **भावनः–**सृष्टिस्थितिसंहारैः जगद् भावयति। कर्मफलानि भावयति, भावान् पदार्थान् तत्तदनुगुणं नयति, भावान् जीवान् निरयभूस्वर्गादिषु नयति, सर्वेषां भावं मनोगतं प्रणयति, भावनीयश्च सतां हृदीति भावनः। भश्च अवनश्च। भया ज्ञानप्रभया वन्यते। भक्तैरावननीयश्च। भावो भक्तिः। भावेन वशे नीयत इति भावनः। भक्तिरेनं नयति गमयतीति च। भावा भक्ता एनं स्वहृदि नयन्तीति च ॥



३३. **भर्त्ता–**सर्वं बिभर्तीति भर्ता। देवानां भर्ता। रमायाश्च भर्ता। संसारभारात् तारयतीति च भर्ता। दुःखभरं तरन्त्यनेन। गुणभरितत्वाच्च भर्त्ता ॥

३४. **प्रभवः–** प्रभवति सर्वमनेनेति। स्वयं प्रकृष्टो भवति। जीवाश्च अनेन प्रकृष्टा भवन्ति। प्रकृष्टाश्चास्य भवाः अवताराः। प्रकृष्टत्वात् प्र। सर्वदा भवतीति भवः। प्रकृष्टश्च भश्च वश्च ॥

३५. **प्रभुः–**प्रभवति सर्वसमर्थः। प्रकृष्टो भवति। भक्तानां प्रकटो भवति। प्रथमो भवति। प्रथमं च भवति। अधिकमुपरि (२९९) ॥

३६. **ईश्वरः–**ईष्ट इति सर्वेश्वरः। ईशानां ब्रह्मादीनामपि वरः। जगदीशा रमा। तस्या अयं वरो भर्ता। ईशश्च वरश्च। ईष्टे वाति रमते च। अधिकमुपरि (७४) ॥ १७ ॥

**स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः।**
**अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ १८ ॥**

३७. **स्वयम्भूः–**स्वयमेव भवतीति स्वयम्भूः। स्वतन्त्रो भवतीति च स्वयम्भूः। स्वं स्वीयं यं वायुं भावयतीति च स्वयम्भूः। स्वतन्त्रत्वात् स्वयम्, भूतत्वाद् भूमत्वाच्च भूः। स्वं च यं च भूश्च वा। स्वयम्भुवि चतुर्मुखे गतत्वाच्च स्वयम्भूः ॥

३८ **शम्भुः–** शं भवत्यनेनेति शम्भुः। स्वयं च शम् आनन्दरूपो भवति। शम्भोरन्तर्यामी च शम्भुः ॥

३९. **आदित्यः–**अदितिनन्दनो वामनो भवन्नादित्यः । आदित्यगतत्वाच्चायमादित्यः। सर्वस्मादादौ विद्यमान इति चाऽदित्यः। सर्वस्याऽदिश्चत्यः आनन्दानुभवरूपश्चेति आदित्यः । 'तीत्यानन्दः समुद्दिष्टो येति ज्ञानमुदाहृतम्' इति हि स्मरन्ति । आदिषु जगत्कारणेषु ततो यमयतीति च आदित्यः । अधिकमुपरि (५६७) ॥

४०. **पुष्कराक्षः–**पुष्करदळे इवाक्षिणी अस्य । भक्तानां पुष्टिकरे चाक्षिणी अस्य । पुष्टिकरत्वात् पुष्करः । न क्षीयत इत्यक्षः । पुष्टिकरश्च अश्च क्षश्च । अधिकमुपरि (५६०) ॥

४१. **महास्वनः–**महान् वेदाख्यः स्वनोऽस्य । महांश्च दैत्यहृदयविदारणः स्वनोऽस्य । महानसुर्मुख्यप्राणः । तस्यानश्चेष्टकः । महत् स्वं धनं नयति प्रापयतीति महास्वनः । सतां महत् स्वं सम्पदयं नेता च । महेषु उत्सवेषु असुभिरसुना वा सह चेष्टते । मह्यत इति महश्चायमसनादसुश्चायमनश्च ॥

४२. **अनादिनिधनः–**आदिनिधने अस्य न स्तः । अनादेरपि संसारस्य निधनहेतुरयम् । अनस्य मुख्यप्राणस्यापि आदिनिधने अनेन भवतः । अनादिश्चायमिभ्येषु निहितधनश्च । अनश्चाऽदिश्च निधनश्चायम् ॥

४३. **धाता–**दधाति धारयति पोषयति चेति धाता । सर्वाभीष्टदाता च । धाञ् दाने । अधिकमुपरि (९५१) ॥

४४. **विधाता–**विशेषतो धाता मोक्षदानेन । कर्मणामुचितं फलं विदधाति च । बहुविधां जगतीमातनोति, अतति च । विविधाः संसारगतीस्तरन्त्यनेन । विश्च धाता च । अधिकं तूपरि (४८६) ॥

४५. **धातुरुत्तमः–**अत एव उत्तमो धातुर्धारकः । धातुर्विरिश्चादप्युत्तमः । सर्वैरपि धातुभिः जगद्धारकैर्देवैः रुततमः स्तुततमः । धातुभिः क्रियापदैरपि रुततमः । सप्तधातुभी रुद्धं धातुरुत् शरीरम् । तत् ताम्यति इच्छति



स्वाधिष्ठानतया । तत् ताम्यति खिद्यत्यनेन । तमु काङ्क्षायां खेदे च । धातुश्च रुततमश्च ॥ १८ ॥

**अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।**
**विश्वकर्म्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ १९ ॥**

४६. **अप्रमेयः–** अविज्ञेयः साकल्येन । इयत्ताराहित्यादपरिमेयश्च । अधिकश्च प्रकृष्टश्चेति मेयः । अधिकं प्रकृष्टः माभिर्मानैरीयते च । माभिर्वेदवाग्भिरीयते । मया रमया चेयते । अप्रमैरेकाक्षरैरीयते । न प्रमीयत इत्यप्रमः । ईं लक्ष्मीं यातीतीयः । स चासौ स चेत्यप्रमेयः । तया ईयत इति च ॥

४७. **हृषीकेशः–**हृषीकाणामिन्द्रियाणामीष्टे । स्वयं हृष्टः जगच्च हर्षयन् सूर्यचन्द्रयोः केशेषु किरणेषु स्थित इति । हृष्यन्त्येभिरिति हृषयः केशा अंशवोऽधिष्ठानमस्य । स्वयं हृषी हृष्टः । कस्य ब्रह्मणश्च ईशः । अन्येषामानन्दस्येशो वा । येन वा केशौ ब्रह्मेशानौ हृष्टौ ॥

४८. **पद्मनाभः–**जगदाख्यं पद्मं नाभावस्येति पद्मनाभः । अस्य मुखकरचरणशोभायाः पुरः पद्ममपि नाऽभाति । अधिकमुपरि (१९६; ३४७) ॥

४९. **अमरप्रभुः–** प्रभुरयममराणां देवानां मुक्तानां च । अमममितं रं रमणमस्येति अमरश्च प्रभुश्च । अमरेषु वामनात्मा प्रभवति च । अमरेषु प्रकृष्टोऽमरप्रो ब्रह्मा भवत्यनेन । अमरान् प्रातीति अमरप्रो ब्रह्मा । प्रा पूरणे । सोऽपि भवत्यनेन ॥

५०. **विश्वकर्म्मा –**विश्वकर्तृत्वाद् विश्वकर्मा । विश्वेषां विश्वं च कर्म अनेन । 'न ऋते त्वत् क्रियते' इत्यादेः । विश्वकर्मणि देवत्वष्टरि गतश्च विश्वकर्मा । करोति मिनोति चेति कर्मा । विश्वश्चायं कर्मा च । अन्तः स्थित्वा कर्मकृत्, पूर्णकर्मा च ॥

५१. **मनुः**–मनोरन्तर्यामी । मनुषु मन्त्रेषु वाच्यतया गतः । सर्वं मनुते इति च मनुः । माति च नुदति चेति च ॥

५२. **त्वष्टा**–त्वष्टुरन्तर्यामी त्वष्टा । जगतस्त्वक्षणात् तनूकरणाच्च त्वष्टा ॥

५३ **स्थविष्ठः**–स्थविष्ठेषु स्वविष्ठोऽयम् । सूक्ष्मतमः सन्नपि स्थूलतमः । स्थः स्थिरः । विः पक्षी गरुडः । तत्रायमारूढस्तिष्ठति । 'तिष्ठतीति स्थविः भुजङ्गमः अग्निश्च' इति वैयाकरणाः । स्थवौ शेषे शयानः स्थितः । अग्नौ वा गतः स्थविष्ठः । अधिकमुपरि (४३८) ॥

५४. **स्थविरो ध्रुवः**–स्थविरेषु स्थविरोऽयम् । वृद्धेषु वृद्धतमः । अथापि ध्रुवः स्थिरतमः । अपि च स्थविरेभ्य उद्गतः ध्रुवश्चेति स्थविरो-ध्रुवः । स्थवौ गरुडे रमत इति स्थविरः । सर्वत उत्तमः उकारवाच्यः ध्रुवश्च । स्थे स्थिरे वैकुण्ठे विरमति उं शम्भुं धरमाण उत्कृष्टज्ञान-प्रदश्च । स्थिरे ध्रुवलोके विशेषतो रममाणो भवत्युद्गतो ध्रुवोऽनेनेति च ॥ १९ ॥

**अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।**
**प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥ २० ॥**

५५. **अग्राह्यः**–न गृह्यते चक्षुणा नापि वाचा नापि मनसा । अः इति ग्राह्यश्चाग्राह्यः । सर्वस्याग्रे गतोऽयमहेयश्च । अहिं याति च । अग्राहाणि अन्यैरनियम्यानि याति च यमयति च ॥

५६. **शाश्वतः**– शश्वत् सदा भवतीति । शश्वदेकरूपश्च । आनन्दरूपोऽश्वो हयग्रीवः, ततश्च जगति । आशु अतश्च ॥

५७. **कृष्णः**–सौन्दर्यसारतया सर्वलोककर्षणात् कृष्णः । नियमनादिना कर्षणाच्च कृष्णः । संसारान्मुक्तिं प्रति कर्षणाच्च । कृष्णवर्णत्वाच्च । कृषेर्भूमेः णः आनन्दो येन स च कृष्णः । अथ च 'कृषिर्भूवाचकः'



सत्तावचन इत्यर्थः । णश्च निर्वृतिवाचकः । तेन सदानन्दः कृष्णः । अधिकं तूपरि (५५३) ॥

५८. **लोहिताक्षः**–कप्यासपुण्डरीकवदीषल्लोहिते अक्षिणी अस्येति लोहि-ताक्षः । लोकहिताक्षश्च । लोकमहिताक्षश्च । छिन्नसंसारा मुक्ता लावः । तेषां हितानि सुखदान्येवाक्षाणीन्द्रियाणि यस्मात् ॥

५९. **प्रतर्दनः**–प्रळये सर्वं प्रतर्दयति संहरतीति प्रतर्दनः । प्रकृष्टश्चायं तर्दनः । प्रकृष्टतरणः, दातृत्वाद् दः, नेतृत्वान्नश्च ॥

६०. **प्रभूतः**– 'प्र-भू' इति पदाभ्यां यस्य गुणास्तन्यन्ते स प्रभूतः । सर्वगुणैः प्रभूतः । भूतेषु च भूतिमत्सु प्रकृष्टोऽयम् ॥

६१. **त्रिककुद्धाम**–त्रिषु ककुत्सु तदुपलक्षितमूर्धसु धामान्यस्येति त्रिककु-द्धाम । 'अमृतं क्षेममभयं त्रिधाम्नोऽधायि मूर्धसु' इति हि भगवत-स्त्रयो नित्यलोकास्तत्ककुदि निक्षिप्ताः श्रूयन्ते श्वेतद्वीपानन्तासन-वैकुण्ठाः । 'त्रिककुब्धाम' इत्यन्ये पठन्ति । 'त्रिककुद्धामा' इति च ॥

६२. **पवित्रम्**–स्वयं पवित्राणां पवित्रम् । पुनाति च सर्वम् । पविना वागूवज्रेण श्रुतिपुराणादिनाऽविष्कृतेन त्रायते सज्जनलोकमिति च पवित्रम् । दुर्जनपविना सुदर्शनेन च सतस्त्रायते । इन्द्रायुधे वज्रे च स्वयं सन्निहितः सुरांस्त्रायते । आनन्दं पिबति च वेति सर्वं जनयति च त्रायते च ॥

६३. **मङ्गलं परम्**–मङ्गलानां च मङ्गलमिति मङ्गलं परम् । अथ चैकपद्ये–बिन्दुरवधारणे । अपि च यद्यत् मङ्गलं शुभकरं तत्तत् पिपर्ति पालयतीति मङ्गलम्परं परम्ब्रह्म । बिन्दुरवधारणे । अथ च मगि चपलायां गतौ । चपलगतयो ये मङ्गास्तेषां लम्पं लम्पटतां राति ददाति च राययति च नाशयति च । मं ज्ञानम्, गलं कण्ठं सुनादम्, पाति राति चेति मङ्गलम्परम् ॥ २० ॥

**ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।**
**हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ २१ ॥**

६४. **ईशानः–** ईशाने शिवे स्थितत्वादीशानः । ईशनादीशानः । ईशानामप्यनश्रेष्टक ईशानः । जगदीशां श्रियमपि नयतीतीशानः । अनस्यापीश ईशानः । अनोऽपि येन ईशः स ईशानः । ईशश्च अनश्च । ईं संपदं केषांचित् श्यति तनूकरोति । केषांचिदानयति वर्धयति । ईः लक्ष्मीरानन्देन सह चेष्टतेऽनेन ॥

६५. **प्राणदः–**सर्वानपि प्राणयन् ददाति सर्वमभीष्टमिति प्राणदः । प्राणस्याप्यभीष्टप्रदः । प्राणं गुरुत्वेन ददाति च । स्वयं प्रकृष्टः । सर्वेषां चेतनानां अणं गतिं ददातीति च । अण गतौ । असतामणं दुःखं ददाति । सतामाणं परमानंदं मोक्षे ददातीति च । अधिकं तूपरि (३२२; ४०९;९५६ ) ॥

६६. **प्राणः–**प्राणः प्राणिति प्राणति वा । अन चेष्टायाम् । अण गतौ । प्रकृष्टा आणाः परमानंदिनोऽनेनेति च प्राणः । प्रकृष्टानंदश्च प्राणः । प्रकृष्टा अप्यनन्ति अणन्ति चानेन । पूर्णत्वात् पूरकत्वाच्च प्राणः । प्रा पूरणे क्तः । अधिकं तूपरि (३२१;४०८) ॥

६७. **ज्येष्ठः–**सृष्टेः पुराऽपि स आसेति ज्येष्ठो वृद्धतमः । ये ज्येष्ठास्तेषामयं ज्येष्ठताप्रदः । ज्यया, सज्येन धनुषेति यावत्, शत्रूनिष्णन् ढौकते । ढस्य ठः । तृतीयोऽतिशये । इष आभीक्ष्ण्ये । ढौकृ गतौ ॥

६८. **श्रेष्ठः–**येये प्रशस्तास्तेषामयं प्रशस्ततमः श्रेष्ठः । श्रेष्ठानां श्रेष्ठताप्रदः । अङ्कं श्रिता ईः लक्ष्मीः । तस्यामयं तिष्ठति । श्रितश्च इः कामः तस्मिन्नप्ययं तिष्ठति । श्रयन्त इति श्रा भक्ताः । तेषु इच्छया प्रीत्या तिष्ठति ॥

६९. **प्रजापतिः–**प्रजापतौ गतः प्रजापतिः । प्रजापतिषु च गतः । प्रजाः पाति च । 'प्रजानां पालनाद् विष्णुः प्रजापतिरितीरितः' । प्रजया प्रज्ञया च सतः पाति । अधिकमुपरि (१९७) ॥



७०. **हिरण्यगर्भः–**हिरण्मयं ब्रह्माण्डं यस्य गर्भे स हिरण्यगर्भः । हिरुक् विलक्षणं सुखं हिरण्यम् । तदस्य गर्भे । हिरण्यगर्भस्य चान्तर्यामी । अधिकमुपरि (४१२) ॥

७१. **भूगर्भः–**भूरस्य गर्भे । अयं च भुवो गर्भे । भूः गर्भवती चानेन । भूश्चायं गर्भश्च । भवतीति भूः सदानंदः । प्रळये सर्वस्यापि गर्भस्थानीयः । भुवमन्ते गिरन् भाति । गॄ निगरणे । भुवि गीर्णो भाति । गृणन् भाति ॥

७२. **माधवः–**रमाया धवः । प्रमायाः धवः । मधुविद्यावेद्यः । मधुवंशे च बभूव । मायै अपरोक्षज्ञानाय हृदि धीयते, अन्ते वीयते गम्यते चेति माधवः । मा च भूदन्यो धवोऽस्येति च । मानां सर्ववचसामयं धवः । 'वाचो मा मातरः स्मृताः' । अधिकमुपरि (१६७;७३९) ॥

७३. **मधुसूदनः–**मधुमसुरं सूदयति । सूदाः सुकृतकर्माणो जीवाः । मधु आनन्दं सूदानां नयति प्रापयति । दुष्कृतीनां मधु आनन्दं सूदयति । आनन्दरूपश्चायं सूदानां सत्कर्मणां नेता च । मधुश्चायं संसारसूदनश्च । मधुना आनन्देन सून्नतः, शतानन्द इति यावत्, अनः प्राणोऽनेन ॥ २१ ॥

**ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।**
**अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ २२ ॥**

७४. **ईश्वरः–** द्वितीयं रूपम् । षट्त्रिंशं प्रथमम् । ईं लक्ष्मीं श्वयति गच्छति रमयति च । भक्तानामीं सम्पदं शं सुखं वं ज्ञानं च राति । वरदेशानामपि वरप्रदः । ईं लक्ष्मीं श्वं श्वसनं च रमयति । शं शतानन्दं वं वायुं च वा रमयति । ईशैरपि व्रियते । ईशानामपि वं ज्ञानं रं आनंदश्चानेन ॥

७५. **विक्रमी–** त्रेधा विक्रमणाद् विक्रमी । शत्रुहृदयविदारणश्चास्य विक्रमः । विशिष्टश्चास्य क्रमः । अधिकमुपरि (९१०) ॥

७६. **धन्वी**–दुष्टदमनाय लीलया धृतधनुः । धनं वाययति । धन्यैर्वीयते ॥

७७. **मेधावी**–मेधावान् मेधावी । मेधाविषु मेधाशक्त्यात्मना गतः । मां प्रकृतिं सृष्टीच्छया धावतीति मेधावी । भगवद्विषयां मेधामवन्ति मेधावाः । ते अस्य संतीति मेधावी ॥

७८. **विक्रमः**– जगत्सर्जनादिषु विविधक्रमवान् । शत्रुषु दर्शितविक्रमः । स्वयं विगतक्रमः । विना गरुडेन च क्रमते ॥

७९. **क्रमः**–अवतीर्य भूमौ क्रमते । अश्वेन क्रमते । रथेन क्रमते । भक्ता मनसा क्रामन्त्येनम् । अयं च सर्वत्र क्रमते । क्रं कर्म मं ज्ञानं च यद्विषयं सार्थकं स क्रमः । क्रियते सर्वमनेनेति क्रः । मीयते संह्रियते सर्वमनेनेति मः ॥

८०. **अनुत्तमः**– न कश्चिदस्मादुत्तम इत्ययमनुत्तमः । सर्वोत्तमः सन् जले अनितीत्यनुत्तमः । 'तज्जलानिति शांत उपासीत' इति श्रुतिः ॥

८१. **दुराधर्षः**–नायं शक्यः शत्रुभिराधर्षयितुम् । आ ईषदपि । दुर्जनानाधर्षयति च । ये दुरितेन रमन्ते तानयमाधर्षयति । दुःखाधारा दुराधराः । तेषामप्ययं षः चेष्टकः । 'षकारः प्राण आत्मा' इति श्रुतिः ॥

८२. **कृतज्ञः**– जीवैः कृतं शुभमशुभं च जानन् फलं ददातीति कृतज्ञः । कृतसुकृतैर्ज्ञायते चायम् । अधिकमुपरि (५३५) ॥

८३. **कृतिः**–कृतिः क्रिया सर्वा स्वरूपमस्येति कृतिः । जगत् करोतीति कृतिः । भक्तैर्मनसि क्रियत इति कृतिः ॥

८४. **आत्मवान्**–आत्मवान् स्वरूपभूतशरीरवान् । आत्मानौ ब्रह्मवायू पुत्रत्वेनास्य स्तः । आत्मा अहंकारमानी शिवः पौत्रत्वेनास्ति । सर्वेषां जीवात्मनामंतर्यामी । आत्मनां मनसामीशितृत्वाच्च आत्मवान् । आत्मा शरीरम् । शरीरगत आत्मवान् । आत्मा मध्यदेहः । हृदयगत आत्मवान् ॥ २२ ॥



**सुरेशः शरणं शर्म्म विश्वरेताः प्रजाभवः ।**
**अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ २३ ॥**

८५. **सुरेशः**–सुराणामीशः । सुखं रमते चेष्टे च । सुखं रान्ति ददति ये तेषामीशः । सुरं मुक्तिपदं तस्यापीष्टे ॥

८६. **शरणम्**–आपन्नरक्षणात् शरणम् । निवेशश्चायं भक्तानाम् । आनन्दमयो रणः शब्दो वा युद्धं वाऽस्येति शरणं परं ब्रह्म । आनन्दक्रीडाबल-रूपत्वाच्च । 'णकारो बलम्' इति श्रुतिः ॥

८७. **शर्म**–आनन्दमयत्वाच्छर्म । सुखेन रमते रमयति चेति । शरान् जीवान् माति निर्माति च । शृणाति निर्माति च ॥

८८. **विश्वरेताः**–विश्वस्य जगतः रेचनाद् विश्वरेताः । विश्वस्य वायोर्ब्रह्म-णश्च जनक इति विश्वरेताः । विश्वस्मिन् रमत इति विश्वरेताः ॥

८९. **प्रजाभवः**–प्रजा भवन्त्यनेनेति प्रजाभवः । प्रजा प्रज्ञा च प्रभवत्य-नेन । स्वयं प्रजायते, अथाप्यभवः । प्रजा अप्यभवा भवन्त्यनेन ॥

९०. **अहः**–अहेयत्वादहः । अहस्सु च सन्निहितः । जीवगोऽहम् । सूर्यगोऽ-हः । भक्तान् न जहातीति चाहः ॥

९१. **संवत्सरः**–सम्यग् वत्सान् ब्रह्मादीन् रमयतीति संवत्सरः । स्वस्मिन् संवसतः रमयतीति संवसद्रं संतमेनं संवत्सरमाचक्षते । समिति संपूर्णो भगवान् । मनसि धृतभगवन्तः संवन्तः । तेषु सदा सरति । कालात्मना संवत्सरगतश्च संवत्सरः । कालमानिनि संवत्सराख्ये चतुर्मुखे च गतः । सम्पूर्णो भक्तवत्सलश्च । अधिकं तूपरि (४२३) ॥

९२. **व्यालः**–असतां व्याल इव व्यालः । व्यालेषु च स्थितः । 'ब्राह्मणे गवि हस्तिनि' इति हि गीतासु । व्याळ इति मत्तो गजः, सर्पो वा । विविधम्, आ समन्तात् अडतीति व्यालः । अड उद्यमे । विरो-धिनः आ अडति हिनस्तीति च । अडस्तैक्ष्ण्यमिति वैयाकरणाः । तेन दुर्जनेषु विशिष्टः आ अडोऽस्येति च । अज्मध्यस्थत्वाड् डस्य ळः ॥

९३. **प्रत्ययः–**प्रत्ययः प्रज्ञानं ब्रह्म । प्रतीयते वेदेषु वेदैर्वा । प्रत्येकं बिम्बरूपतयाऽयते च । सर्वत्र प्रतिष्ठितः शुभावहश्च ॥

९४. **सर्वदर्शनः–** सर्वतश्चक्षुः सर्वदर्शनः । सर्वं पश्यन् दर्शयन् वा सर्वदर्शनः । सर्वाणि दर्शनान्यस्यैव निदर्शनानि । सर्वशास्त्रमुख्यार्थ इत्येतत् । सर्वश्च ज्ञानरूपश्च ॥ २३ ॥

**अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।**
**वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ २४ ॥**

९५. **अजः–** न कदाऽपि जायते । अथापि अः अप्राकृतः सन् जायते । अजे च ब्रह्मणि नित्यसन्निहितः । अधिकमुपरि (२०४;५२३) ॥

९६. **सर्वेश्वरः–** सर्वेषामीश्वरः । सर्वेषामीशानां वरः । सर्वश्च ईश्वरश्च ॥

९७. **सिद्धः–**नित्यसिद्धः सिद्धः । सर्वं सिद्धमस्य न किमपि साध्यमिति च । अधिकमुपरि (८२३) ॥

९८. **सिद्धिः–**ज्ञानानन्दरूपत्वात् सिद्धिः । ज्ञानं च सुखं च हि चरमा सिद्धिः । सर्वसिद्धिकारणत्वात् सिद्धिः । सर्वसाधनसिद्धिरूपश्चायम् ॥

९९. **सर्वादिः–** सर्वेषां आदिः, सर्वस्य सृष्ट्याद्यष्टकस्य चाऽदिः । सर्वमादत्ते च । सर्वश्च आदिश्च ॥

१००. **अच्युतः–** गुणक्रियादिभिः कदाऽपि न च्यवते । मुक्ता अच्युता भवन्त्यनेन । अधिकमुपरिष्टात् (३१९;५५६) ॥

**॥ इति नाम्नां प्रथमं शतकम् ॥**

१०१. **वृषाकपिः–**अभीष्टवर्षणाद् वृषः । कं जलम् । कात् पातीति कपिः । प्रळयपयोधिजलादुद्धृतधरणिः । वृषश्चायं कपिश्चेति वृषाकपिः । कं आनंदं पिबति पाययतीति च कपिः । असतामकं दुःखं पाययतीति



अकपिश्च । अथच वृष इति धर्मः । कपिरिति वराहः । उक्तनिर्वचनादेव । 'कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते' इति शान्तिपर्वणि । वृषश्च कपिश्चेति वृषाकपिः । वृषश्च आकं पूर्णसुखं पिबति च । वृषं धर्मं न कम्पयति । वृषा इन्द्र आकम्पतेऽनेनेति च ॥

१०२. **अमेयात्मा–** अप्रमेयः अपरिमेयश्च, अज्ञेयोऽपरिच्छेद्यश्च, आत्मा स्वरूपमस्य । अः इति मेयात्मा च । अमेयश्च । सर्वेषामात्मा अंतर्यामी च । अश्च यथाशक्ति ज्ञानिभिर्मोक्षार्थं मेयश्च आत्मा च । अमैव जीवेन सहैव ईयश्चायं परमात्मा नत्वभेदेन । 'द्वा सुपर्णा सयुजा सखाया–' इत्यादेः । अमितत्वात् 'अमा' इत्यव्ययेनापि वाच्यः । इच्छाज्ञानरूपत्वादियः । आततत्वादात्मा । अमानामभगवद्विदामिये इच्छाज्ञाने अत्ति नाशयति । स्वयं चामितमिष्टं ज्ञानं चात्ति अनुभवति । अधिकमुपरि (१७९) ॥

१०३. **सर्वयोगविनिःसृतः–**सर्वैरपि योगैः सम्बंधैर्वर्जितः । भक्तिं विना सर्वस्मादप्युपायान्तराद् अज्ञेयतया विनिःसृतः । सर्वश्चायं योगेन स्वसामर्थ्येन सर्वस्माद् विनिःसृतश्च । सर्वश्च योगश्च विनिःसृतश्चायम् । ध्यानयोगेन विशिष्य निश्चयेन सृतः अवगतश्च । सर्वैः जीवैः यौति सङ्गतो भवतीति सर्वयौः । गवि वेदवाचि निहितः सतामर्थे निःसृतश्च ॥ २४ ॥

**वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।**
**अमोघः पुण्डरीकाक्षो वृषकर्म्मा वृषाकृतिः ॥ २५ ॥**

१०४. **वसुः–** वसत्ययं सर्वत्र । वसति च सर्वमत्र । वसुषु गतः । वसुमुख्ये पावके च गतः । वरसुखश्च वसुरित्युक्तः । वं ज्ञानम्, वरांश्च सूतेऽयम् । अधिकमुपरि (२७१;७००) ॥

१०५. **वसुमनाः–** वसु पुटपक्वं पुरटमिव विशुद्धं भ्राजमानं च मनोऽस्येति वसुमनाः । 'सत्वं विशुद्धं वसुदेवसञ्ज्ञितम्' इति हि स्मरन्ति ।

वसुमुख्यमग्निं भूस्थाने स्वप्रतीकं मन्यत इति वसुमनाः । वं ज्ञानात्मकं सु सुखात्मकं च मनोऽस्येति वसुमनाः । सुमनस्सु वरोऽयमिति वसुमनाः । वसुश्चायं मनुत इति मनश्चायम् । वसुनि हिरण्य एव मनो येषां तेषामप्यन्तः स्थित्वाऽयमेव तथा प्रेरयति । यथा भगवन्तमवमन्येरन् । वसून्येव सम्मन्येरन् । अधिकमुपरि (७०१) ॥

१०६. **सत्यः–** सत्यः साधुगुणः । सत्यः सतां हितः । सदिति प्राणः । तीत्यन्नमानी प्रजापतिः । तौ यमयतीति सत्यः । सन्त इति मुक्ताः । तीति मर्त्यम् । तेन मुक्तामुक्तनियामकः सत्यः । सत्तामत्पुत्तिं यापयतीति सत्यः । सद्भावं स्थितिं यापयतीति सत्यः । अवसादं नाशं यापयतीति सत्यः । यत् सत् तद् यमयतीति सत्यः । सद् ज्ञानं यापयतीति सत्यः । सादं विषादकारणं अज्ञानं यापयतीति सत्यः । विषादात्मकं बन्धं यापयतीति सत्यः । सत् निर्दुष्टं मुक्तिपदं यापयतीति सत्यः । एवं सृष्ट्याद्यष्टकृत् सत्य उच्यते । 'सत्यं ज्ञानमनंतं ब्रह्म' । अधिकमुपरि (२१२;८७३) ॥

१०७. **समात्मा–** सर्वत्र सम आत्मा । 'पंडिताः समदर्शिनः' इत्युक्तम् । समाः सज्ञानाः आत्मानोऽनेन । समश्च सर्वत्र, सर्वेषामात्माऽन्तर्यामी च । मया रमया सहितश्चायमात्मा । मया प्रमया सहितः समः सर्वज्ञः । समं सर्वमत्तीति समात्मा । सर्वान्तर्यामीति च ॥

१०८. **सम्मितः (असम्मितः)–** ज्ञानिभिः सम्मितः । सम्यक् ज्ञातः । अथ चासम्मितः केनापि सम्पूर्णतया न ज्ञातः । सर्वं मितं निर्मितं संहृतं चानेनेति सम्मितः ॥

१०९. **समः–** सर्वत्र सर्वदा समः । मया प्रमया, रमया च सहितः समः । 'अकयप्रविसम्भूमसखहाः' इति सकारमकाराभ्यां वाच्यतया सश्च मश्चेति समः ॥



११०. **अमोघः–**न मोघा यस्य भक्तिः सोऽमोघः । न मोघो यस्य सङ्कल्पः सोऽप्यमोघः । न मोघं येन सृष्टं सोऽप्यमोघः । 'यच्चिकेत सत्यमित् तन्न मोघम्' इति हि श्रुतिः । अमा सह ओघेन जीवसमुदायेन वर्तत इति चामोघः । प्रळयजलौघेन सह वर्तत इति च । अमः अमितः अमेयः, उं शम्भुमप्यन्ते घातयतीत्युघश्च । अधिकमुपरि (१५४) ॥

१११. **पुण्डरीकाक्षः –** 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति हि श्रुतिः । विश्वाख्ये पुण्डरीके अक्षीण्यस्य । जीवस्वरूपहृत्पुण्डरीकमक्षयं स्थानमस्य । हृदयपुण्डरीकमक्ष्णोति व्याप्नोतीति पुण्डरीकाक्षः ॥

११२. **वृषकर्म्मा–** वृषात्मकं धर्ममयं कर्मास्य । भक्तानामभीष्टवर्षकं च । वृष्णीन्द्रे हस्तमानिनि स्थित्वा कर्माणि कारयति चायम् ॥

११३. **वृषाकृतिः–**लोके वृषार्थं धर्मसंस्थापनार्थाय मत्स्याद्याकृतिर्भवतीति वृषाकृतिः । वृतषड्गुणा अस्याऽकृतयो भवन्ति । भक्तानामभीष्टदोहाय चास्याऽकृतयो भवन्ति । वृषान्तर्यामी च वृषाकृतिः ॥ २५ ॥

**रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।**
**अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः ॥ २६ ॥**

११४. **रुद्रः–** रुक् दुःखं संसारो वा । रुजं द्रावयतीति रुद्रः । असतः रोदयतीति रुद्रः । रुद्रे गतश्च रुद्रः । वेदरुते रतश्च ॥

११५. **बहुशिराः–**'सहस्रशीर्षा पुरुषः' इति बहुशिराः । बहूनि लीलया श्रयतीति च । बहवश्चैनं श्रयन्ति । बहुविधं रसयति रासयति चेति बहुशिराः ॥

११६. **बभ्रुः–** जगद्भरणाद् बभ्रुः । वर्णतः कृष्णपिंगल इति च बभ्रुः । बेन स्वेच्छया भ्रमतीति बभ्रुः । ब कामने । बं कामं बलं वा भरतीति च । बलेन भगेन च ब इति भ इति रूयते ॥

**११७. विश्वयोनिः–** विश्वस्य वायोर्ब्रह्मणश्च योनिः । विश्वस्य जीवजातस्य योनिः । विश्वस्य सर्वस्य च योनिः । विश्वश्च योनिश्च । विश्वेन वायुना सहस्थितो विश्वयौः । अकामत्वादनिश्च । अधिकमुपरि (१४९) ॥

**११८. शुचिश्रवाः–**शुचीनि पापहराणि श्रवांसि नामानि कीर्तयो वाऽस्येति शुचिश्रवाः । पुण्यश्रवणकीर्तनः ॥

**११९. अमृतः–** नित्यमुक्तत्वादमृतः । न विद्यते मृतं मृतिरस्येति । अं अकारवाच्यं स्वात्मानमेव ऋतः गतः । स्वे महिम्नि प्रतिष्ठितः । अन्तकत्वादम्, ऋतश्च । अनुस्वारवाच्यत्वादम्, ऋकारवाच्य ऋत इति ऋतम्भरः ॥

**१२०. शाश्वतस्थाणुः–** शाश्वतः शश्वत् सदा भवतीति । स्थिर एकरूपो भवतीति स्थाणुः । शाश्वतेषु जीवेषु स्थितः अणुरूपश्चायम् । शाश्वतश्च स्थश्च अणुश्चायम् । शाश्वतः स्थाणुगतश्चायम् ॥

**१२१. वरारोहः–**श्रिया श्रितः वरः आरोहः अङ्कोऽस्य । वराणां मोक्षं प्रत्यारोहो येन । वरश्च, परेषामारोहहेतुश्च । वं ज्ञानं रातीति वरः । वरं रातीति वा । न रोहति न वर्धत इत्यरोहः । वर एव सन्नारोहति प्रादुर्भवतीति । वरणीयां प्रकृतिं रोहयतीति च । ज्ञानानन्दरूपत्वाद् वं रम् । आकारो व्यासवचनः । 'अ आ अं अः पुराणर्षिः' इति स्मरणात् । तदात्मना रोहति प्रादुर्भवति । आकारश्चतुर्मुखश्च । तं सर्वेषामुपर्यारोहयति च । वराणां वरे स्थान आरोहो येनेति च ॥

**१२२. महातपाः–**महाज्ञानो महततपाः । 'यस्य ज्ञानमयं तपः' । महांश्च प्रतापोऽस्य । महान् सूर्ये स्थित आतपति । ज्ञानिनो महत् तपश्च यदाराधनरूपम् । महान्ति तपांसि युक्तयः यस्मात् स्फुरन्ति ॥२६॥

**सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।**
**वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः ॥ २७ ॥**



**१२३. सर्वगः–**सर्वगतः । सर्वज्ञश्च । सर्वं गतमस्मिन् । सर्वैः पदैर्गम्यते । मुक्तौ च सर्वैर्गम्यते । सर्वैर्यथाशक्ति अवगम्यते च । सर्वश्च गश्च ॥

**१२४. सर्वविद्भानुः–** सर्वं विदन् भातीति सर्वविद्भानुः । सर्वं वेत्ति च, सर्वत्र भाति च । सर्वविदः ब्रह्मादयोऽप्यनेन भांति । भानोः प्रभां नुदतीति च भानुः । भानुगतश्च भानुः ॥

**१२५. विष्वक्सेनः–**विष्वक् परितः परिवारभूता देवसेना यस्य । विश्वतो-मुखं द्रुता दैत्यसेना येन । विषु परितः अश्नतीति विष्वक् सर्व-गतः । इनेन सूर्येण सह स्थित इति सेनः । सकारवाच्यः । इनश्च सर्वेषाम् ॥

**१२६. जनार्दनः–** जनान् दुष्टानर्दयति । सज्जनैरर्द्यते अर्थ्यते च । स्वयं न जायते अर्दयति च संसारे । जनं जननमर्दयति च । जनयत्य-र्दयति च । स्वयं जनित्वाऽर्दयति दुष्टान् । जातः नार्दयति अर्दनरहितान् करोति सतः ॥

**१२७. वेदः–** सर्ववेदनाद् वेदः । सर्वेषां सर्वमयमेव वेदयतीति च वेदः । वेदवेद्यत्वाद् वेदः । ज्ञानरूपत्वाच्च । वेदनात् दानाच्च वेदः ॥

**१२८. वेदवित्–** अनन्तान् वेदान् वेत्तीति वेदवित् । वेदान् वाच्यतया विन्दतीति च । अधिकमुपरि (१३१) ॥

**१२९. अव्यङ्गः–** व्यङ्गो न भवति । ज्ञानानन्दमयाङ्गः । अत एव न व्यज्यत इति अव्यङ्गः । भक्तानवन्ति चास्याङ्गानीत्यव्यङ्गः । अव्यमवनीयं जगद् गच्छतीति चाव्यङ्गः । अवयो जगद्रक्षका देवा अङ्गान्य-स्येति च । अश्च प्राकृताङ्गरहितश्च । विशिष्टज्ञानानन्दमयाङ्गश्च । अवीन् अङ्गति गच्छति वा । अगि गतौ ॥

**१३०. वेदाङ्गः–** वेदा अङ्गान्यस्यावगम इति वेदाङ्गः । वेदाङ्गेषु च वाच्यतया स्थितः । वेदान् वाच्यतयाऽङ्गति गच्छति च ॥

**१३१. वेदवित्**– वेदविदित्यपरं रूपम् । नामैक्येऽपि रूपभेदात् पुनर्वचनम् । यथा राम इति भार्गवोऽपि गीयते राघवोऽपि । कृष्ण इति वासुदेवोऽपि, बादरायणोऽपि, धर्मतनयोऽपि । वेदान् वेदयति ज्ञापयति, प्रापयति चेति वेदवित् । वेदान् विंते विचारयतीति वेदवित् । वेदकाः ब्रह्माद्या वेदाः । तेऽपि तं विदन्ति तेनैवेति वेदवित् । तेऽपि विद्यन्ते उत्पद्यन्तेऽनेनेति वेदवित् । विद उत्पत्तौ ॥

**१३२. कविः**– सर्वज्ञः । कश्च आनंदमयश्च विश्च विगतदोषश्च कविः । करोति विश्वमिति कविः । कं ब्रह्माणं वायुं दक्षं वा वेति गच्छति, जनयति, अन्ते निरस्यति चेति कविः । तान् सृष्टिविस्तारार्थमिच्छति वा ॥२७॥

**लोकाध्यक्षः सुराध्यक्षो धर्म्माध्यक्षः कृताकृतः ।**
**चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ २८ ॥**

**१३३. लोकाध्यक्षः**– लोकानामुपर्यस्य अक्षाणीति लोकाध्यक्षः लोकानामधीक्षिता । सर्वलोकाधिकः । अक्षयश्च । अधिकनिवासो वा । क्षि निवासगत्योः । अधिकमक्षति वा । अक्षू व्याप्तौ ॥

**१३४. सुराध्यक्षः**– सुराणामधीक्षकः । सर्वसुराधिकः, अक्षयः । अधिकः सन् सुरानानक्ष च ॥

**१३५. धर्माध्यक्षः**–धर्ममार्गस्य अधीक्षकः । यत्परतयैव धर्मो धर्मो भवति । सर्वधर्मोत्तमः अश्च, क्षपणात् क्षश्च । धर्मेषु धारकेषु अधिकृतमक्षि अस्य । अधिकमक्ष्णोति व्याप्नोति वा ॥

**१३६. कृताकृतः**– स्वयमेवाऽत्मानं बहुधा करोति । अथापि न कृतः । ज्ञानिभिर्मनसि कृतः, अज्ञानिभिर्न कृतः । नित्यानित्येषु सन्निहितः । कृतमप्यकृतं यद्विस्मरणेन, कृतमकृतमपि यत्समरणेन स कृताकृतः ॥

**१३७. चतुरात्मा**–चत्वारः आत्मानः मूर्तयः विश्वाद्या अस्येति चतुरात्मा । चतुरश्चायमात्मा । चतुर्षु च वेदेष्वाततः । जाग्रत्स्वप्नसुषुप्तिषु समाधौ



चेति चतसृष्ववस्थासु च । स्थूलसूक्ष्मलिङ्गस्वरूपभेदेन चतुर्विधेषु च देहेषु । अधिकमुपरि (७७३) ॥

**१३८. चतुर्व्यूहः**– अत एव चतुर्धाऽत्मानं व्यूहते इति चतुर्व्यूहः । वासुदेवाद्यात्मना मोक्षं संहारं सृष्टिं स्थितिं च कुर्वन् । अधिकमुपरि (७७१) ॥

**१३९. चतुर्दंष्ट्रः**– नरसिंहादिरूपः स्वयं चतुर्द्रंष्ट्रः । चतुर्द्रंष्ट्रे ऐरावते चायं सन्निहितः । विश्वादनचतुरदंष्ट्रश्चायम् ॥

**१४०. चतुर्भुजः**– चत्वारो भुजा अस्य । धर्म्मादीन् चतुरः पुरुषार्थान् भोजयति चायम् । चतुरो वर्णान् यथार्हं पालयति चायम् । विश्वरक्षणदक्षभुजश्चायम् । चतुर्विधमन्नरसं भुङ्क्ते चायम् ॥ २८ ॥

**भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्ज्जगदादिजः ।**
**अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ २९ ॥**

**१४१. भ्राजिष्णुः**– आदित्यचन्द्रादिषु स्थित्वा भ्राजते । स्वयं च सदा सर्वाधिकं भ्राजनशीलः । भ्राजिषु भ्राजनशीलेषु बलचेष्टाप्रदः सन्निहितः । 'णकारो बलम् । षकारः प्राण आत्मा' ॥

**१४२. भोजनम्**– चेतनस्य भोजनभूते जडे गतत्वात् भोजनम् । भोजनक्रिया चैतदधीना । भोजयतीति च भोजनम् । भोजा नाम यदवः । तान् नयत् कृष्णरूपेण भोजनं ब्रह्म । भोगजननाच्च भोजनम् । भक्तानां सुखभोगार्थं स्वयमात्मानं जनयति च ॥

**१४३. भोक्ता**– भोक्तरि चेतने गतत्वात् भोक्ता । भक्त्या दत्तं पत्रं पुष्पं भुङ्क्ते । भोक्ता च वक्ता च । अधिकमुपरि (५०२) ॥

**१४४. सहिष्णुः**–भक्तापराधं सहते मर्षयति । अभक्तान् सहते अभिभवति, स्वयं च सहते केनाप्यभिभाव्यो न भवति । 'अनभिभाव्यत्वं सह इत्युच्यते बुधैः' इत्यभिधानम् । अधिकमुपरि (५६९) ॥

१४५. **जगदादिजः–** जगत आदौ स्वयमेव जायते वासुदेवाद्यात्मनेति जगदादिजः । जगदादी चतुराननपवमानौ जगत आदौ जनयति च । जो जनकः । गदादिजो गदाग्रजश्च । जातेजाते गत इति जगत् । आदिजश्च । जगदादिश्च जश्च । जगच्च आदिश्च जश्च ॥

१४६. **अनघः–** 'शुद्धमपापविद्धम्' इत्यनघः । अनं प्राणमप्यन्ते हन्ति । न विद्यतेऽघं यद्भक्तानाम् । अधिकमुपरि (८३५) ॥

१४७. **विजयः–**विजयते सर्वम्, सर्वस्मादधिको भवतीति च विजयः । विजयन्तेऽनेन । विशिष्टो विलक्षणश्च जयोऽस्य । विना गरुडेन जयन् याति ॥

१४८. **जेता–** जेता सर्वस्य । जयन्, जनयन् वा एता । जनकं जननीं वा नियन्तुमेता । जनमेता । जननाय भुवमेता वा । नास्य कश्चिदन्यो जेता । तेन अजेता च ॥

१४९. **विश्वयोनिः–** विश्वयोनिरिति द्वितीयं रूपम् । ११७तमं प्रथमम् । विश्वस्य जगतः योनिः । विश्वश्च वायुरस्य योनिरभिव्यक्तिस्थानम् । विश्वः परिपूर्णश्चायं योनिः सर्वस्येति च । सर्वत्र विशतीति विशुः । स्वयमयोनिश्च । विश्वासु स्त्रीयोनिष्वयमेव स्थित्वा लोकरमणो भवति । विश्वं शब्दजातं योनिर्ज्ञप्तिकारणमस्य । विश्वं यौति स्वयमनिरकामः । यौति नयति चेति वा ॥

१५०. **पुनर्वसुः–** पुनःपुनः शरीरेषु जीवमादाय वसतीति पुनर्वसुः । पुनातीति पुनरित्यव्ययप्रतिपाद्यः । पन्यते स्तूयत इति वा पुनः । अस्य उकारः । पनते व्यवहरतीति वा । वसुषु देवेषु गतो वसुः । वसुनि द्रविणे वा गतः । पुनानो वसतीति वा ॥ २९ ॥

**उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।**
**अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ॥ ३० ॥**



१५१. **उपेन्द्रः–** इन्द्रादुपरि स्थितः उपेन्द्रः । अथापि इन्द्रमुपगतः इन्द्रानुजतया जातः । 'अजघन्यो जघन्यजः' इति भारते । इन्द्रस्य च वायोः समीपे सदा भवति । सर्वोपरि गत इत्युपेत्यव्ययवाच्यः परमेश्वरः । उपरः, इदं प्रति द्रवणादिन्द्रः ॥

१५२. **वामनः–** उपेन्द्रो वामनः दशस्ववतारेषु । अत्र तु उपेन्द्रः पुनर्वामननामा बभूव । आकारेण च वामनः । वामं सौंदर्यं नयतीति वामनः । वं ज्ञानं अमं अज्ञानं च तेषान्तेषां नयतीति वामनः । वश्च आमननीयश्च वामनः । वश्च अमितश्च नेता च ॥

१५३. **प्रांशुः–** यो वामनेषु तृणगुल्मादिषु स्थितः स एव प्रांशुषु न्यग्रोधादिषु स्थितः । प्रांशुः सर्वतः समुन्नतः । 'परो दिवा पर एना पृथिव्या' । प्रकृष्टा अंशवः किरणाः अंशाश्चास्य । अंशवः भिन्नांशा जीवाः प्रकृष्टा येन ॥

१५४. **अमोघः–** द्वितीयं रूपम् । ११०तमं प्रथमम् । अमोघ इति पुनारूपांतरम् । न किञ्चिदपि मोघं तस्मिन् । धाम्ना स्वेन सदा निरस्तकुहकः । अकारवाच्ये स्वस्मिन् विषये मोघो मृषा त्रिसर्गो यस्य । अथापि न मोघा चेष्टा यस्य । अश्च मश्च । अवतीत्यूकारः । हन्तीति घश्च । अन्तकत्वादम् । अधिकोच्चत्वादो । घातनाच्च घः । घटयतीति च घः । घर्मत्वाच्च घः ॥

१५५. **शुचिः–**नित्यशुद्धः शुचिः । शोचति रोचत इति रोचमानः शुचिः । उन्नतं शं सुखं शु । तेन चितः सम्भृतः । शुभेन चितः । शुकेन निश्चितः । चितो वा मनसि । अधिकमुपरि (२५२) ॥

१५६. **ऊर्जितः–** बलेनोर्जितः । अतितरामुरव इत्यूरवोऽपि जिता अनेन । उरु जितमस्य । यत् कामिन्य ऊरुभ्यां जयन्ति तदनेन जयन्ति ॥

१५७. **अतीन्द्रः–**इन्द्रमतिगत इत्यतीन्द्रः । इन्द्र इति वायुश्च । वायुमप्यतिगतः । अततीत्यतीत्यव्ययवाच्यः परमेश्वरः ॥

१५८. **सङ्ग्रहः–** सर्वं स्वोदरे सङ्गृह्णातीति सङ्ग्रहः । यथार्थं ग्रहणमस्येति च सङ्ग्रहः । सर्वगुणानामेकसङ्ग्रहश्चायम् । भक्तान् समेत्य गृह्णाति च । सम्पूर्णत्वात् सम् । ग्रहणाद् ग्रहः । सम्यग् ग्रसति जहाति च ॥

१५९. **सर्गः–** जगत्सर्जनात् सर्गः । हितेषु सरणादहितेभ्योऽपगमनाच्च । ऋतगा ऋगा मुक्ताः । तैः सहितश्चायम् ॥

१६०. **धृतात्मा–** धृतः आत्मा ब्रह्मा वायुश्च, आत्मानश्च जीवा अनेनेति धृतात्मा । ज्ञानिभिरात्मनि मनसि धृतः । अथच ज्ञानिभिरवधृतोऽय-मात्मा । धृतः, ततश्चाऽत्मा ॥

१६१. **नियमः–** सर्वस्य नियमनान्नियमः । नियमेषु शौचादिषु गतः । पापिनो नीचैस्तमसि यमयति । नयतीति नि । यश्च मश्च । अधिक-मुपरि (८६९) ॥

१६२. **यमः–**यमे स्थितः यमः । यमेषु चाहिंसादिषु । अन्तः स्थित्वा यमयतीति यमः अन्तर्यामी । याति माति च । यो वायुस्तस्यापि मा ज्ञानं येन । अधिकमुपरि (८७०)॥ ३० ॥

**वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।**
**अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ ३१ ॥**

१६३. **वेद्यः–**सर्वैर्वेदैः सर्वैश्च शब्दैर्वेद्यः । मोक्षार्थं जीवैर्वेद्यः । वेत्तीति वे । द्यतीति द्यः ॥

१६४. **वैद्यः–** सर्वविद्यानामयं परममुख्यार्थ इति वैद्यः । सर्ववैद्येषु चायमेव स्थित्वा अगदङ्करः । 'वैद्यो नारायणो हरिः' । वातीति 'वै' इत्यव्ययवाच्यः । द्युतेः द्योतनाच्च द्यः ॥

१६५. **सदायोगी–** सदायोगी सर्वोपायवित्, सर्वसामर्थ्य्ययुक् च । सदा भक्तियोगा ये तेषामयं बन्धुः । सदा शुभकर्माणः सदायाः । सन्तं



भगवन्तं सदा यान्तीति वा सदायाः । तैरयमुरुधा गीयत इति सदायोगी । सदा यौति, सद्भिर्वा आयौति गीयते च । सदातनत्वात् 'सदा' इत्यव्ययवाच्यः । योगपतिश्च ॥

१६६. **वीरहा–**वीरान् हन्ति वीरहा । विशिष्य ईरं समीरं हन्ति गच्छति । वीरश्च दोषहानाद् हा च । वातीति विः । विलक्षणत्वादिना 'वि' इत्यव्ययवाच्यः । ईरयतीतीरः । सर्वत्र हन्ति गच्छतीति हा । हानात् 'हा' इत्यव्ययवाच्यश्च । अधिकमुपरि (७४५,९२८) ॥

१६७. **माधवः–** माधव इति पुना रूपान्तरम् । ७२तमं प्रथमम् । ७३९तमं तृतीयम् । मानं ज्ञानं लयश्च निर्माणं च । जगत् जानाति, सृजति नाशयति चेति मः । आधारणाद् आधः । वाति च सर्वत्रेति माधवः । ज्ञानरूपत्वात् सर्वदोषनिषेधाच्च 'मा' इत्यव्ययवाच्यः । शत्रुधूननाच्च धवः ॥

१६८. **मधुः–**आनन्दरूपत्वान्मधुः । मदनिधिर्मधुः । आनंदनिधिरित्येतत् । मत्तान् धुनोतीति मधुः ॥

१६९. **अतीन्द्रियः–** इन्द्रियाण्यतिगतः । इन्द्रियागोचरः । अतिशयितानि इन्द्रियाणि चास्य । अतीन्द्रियेषु गतः । अतीन्द्रो भगवानेषामस्तीत्य-तीन्द्रिणो भक्ताः । तानयं याति ॥

१७०. **महामायः–** महती विश्वमोहिनी माया यदधीना स महामायः । महती च माया ज्ञानं, इच्छा, महिमा च यस्य स महामायः । महती मा प्रमा यस्य स महामः । अयः शुभावहश्च । मश्च, अश्च, यश्च । महांश्चासौ मायश्च । महती मा वागोङ्कारः । तामयमयते ॥

१७१. **महोत्साहः–** निरन्तरं सृष्ट्यादिकर्मणि अक्षीणोऽस्य उत्साह इति महोत्साहः । स्वयं महानयमुत्साहयति च विश्वं स्वस्वकर्मणि । महश्चायमुत्साहश्च ॥

१७२. **महाबलः–** महाबलेषु स्थितः । महच्च बलमस्य । 'स वै बलं बलिनां चापरेषाम्' । महत्य आपो यत्र तानि महाम्पि तीर्थानि । तानि स्वसन्निधानेनालति भूषयतीति महाबलः । अबाः जितकामाः । ब कामने । महतः अबान् लातीति महाबलः ॥ ३१ ॥

**महाबुद्धिर्म्महावीर्य्यो महाशक्तिर्म्महाद्युतिः ।**
**अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ ३२ ॥**

१७३. **महाबुद्धिः–** बुद्धिमतां बुद्धिप्रेरकः स्वयं महाबुद्धिर्महामनीषः । महती बुद्धिश्चायम् । ज्ञानस्वरूपत्वात् । महश्च अश्च बुद्धिश्चायम् । महाबुधः ज्ञानिनो धिनोति चायम् ॥

१७४. **महावीर्य्यः–** वीर्यवतां वीर्यप्रेरकश्चायं महावीर्यः महापराक्रमः । ब्रह्माण्ड-जनकं महच्च वीर्यमस्य । अन्ते च सर्वग्रासि वीर्यमस्य । महद्भिरविभिरीर्यः स्तुत्यो गम्यश्च । महांश्चाविश्चेर्यश्च । महान् विः पक्षिराड् गरुडः । तेन वाहनेनेर्ते गच्छतीति च महावीर्यः ॥

१७५. **महाशक्तिः–**अनन्तशक्तित्वान्महाशक्तिः । महाशक्तिषु स्थितः । मश्च हश्च अश्च शक्तिरूपश्चायम् । महती श्रीरूपा शक्तिर्भार्या चास्य । शक्यत्वाद्धि भार्या शक्तिरित्युच्यते ॥

१७६. **महाद्युतिः–**सर्वद्योतनी महती द्युतिरस्येति महाद्युतिः । ज्योतिषां ज्योतिः । महानयं द्यवि ततः । महाद्युतिषु सूर्यादिषु च स्थितोऽयम् ॥

१७७. **अनिर्देश्यवपुः–**अथापीदमित्थमित्यनिर्देश्यस्वरूपः । अकारेण निर्देश्यस्वरूपश्च । अधिकमुपरि (६६०) ॥

१७८. **श्रीमान्–** श्रीमानिति द्वितीयं रूपम् । द्वाविंशं प्रथमम् । २२१तमं तृतीयम् । ६१७तमं तुरीयम् । हिरण्मयं ब्रह्मांडमेव यस्य स्वं स सर्वेश्वरः श्रीमान् ॥



१७९. **अमेयात्मा–** द्वितीयं रूपम् । १०२तमं प्रथमम् । अनन्ता आत्मानः अस्माद् भवन्तीत्यमेयात्मा । आत्मना शरीरेणापि अमेयोऽपरि-च्छिन्नः। अमा अधिकं मानं, अमिता वा श्रुतिः । तया ईयतेऽय-मात्मा । अमा कालदेशाभ्याममिता समना रमा । तया चेयतेऽय-मात्मा ॥

१८०. **महाद्रिधृक्–**महतोऽद्रीनयमेव धत्ते । न केवलं मन्दरं कूर्मरूपेण, गोवर्धनं कृष्णरूपेण । किन्तु सर्वानद्रीन् सर्वदाऽपि । अन्यथा कथमद्रयो ध्रियन्ते । आदरणीयत्वादद्रिरिति वायुः । शिवश्च । महान्तौ तावपि धरतीति महाद्रिधृक् । महांश्चायं महितश्चायमद्रिधृक् । मश्च हश्चायमद्रिधृक् । 'महाद्रिधृत्' इति च पठन्ति ॥ ३२ ॥

**महेष्वासो महीभर्त्ता श्रीनिवासः सताङ्गतिः ।**
**अनिरुद्धः सुरानन्दो गोविन्दो गोविदाम्पतिः ॥ ३३ ॥**

१८१. **महेष्वासः–** महत् शार्ङ्गं धनुरस्येति महेष्वासः । अन्येऽपि महान्तः इष्वासा गाण्डीवादयः अस्यैवेति महेष्वासः । प्राणरूपतया महद्भिरिषुभिरास्यत्यसुरानिति महेष्वासः । 'पञ्चात्मको मारुत एव बाणाः' इति स्मरणात् । सर्वेषु महेष्वयमास्ते । महांश्चायमिष्वः सर्वाभिलषितः । पापनिरासकश्च । 'इष्यतेऽसाविति इष्वः अभिलषितः' इति दशपादिकावृत्तिकारः ॥

१८२. **महीभर्त्ता–** न केवलं महीधरान्, किन्तु महीमप्ययं बिभर्ति । मह्याः भूरूपाया लक्ष्म्या अयं भर्ता । महीदेवतायाश्च भर्ता । यस्यामस्यां नरको जज्ञे । दोषहानात् 'ही' इत्यव्ययेनापि मीयत इति मही । गुणभरणाद् भर्ता । महिनां महितानां देवानामपि भर्ता । मह्या भरं भारं तृणत्ति, तुणु च्छेदने । महीं भारात् तारयति वा ॥

१८३. **श्रीनिवासः–** यस्याङ्के, वक्षसि च श्रीर्निवसति स श्रीनिवासः । सर्वाश्च श्रियोऽत्र निवसन्ति । अधिकमुपरि (६११) ॥

१८४. **सताङ्गतिः–** सतां गतिराश्रयः । चरमं च गम्यस्थानम् । षष्ठ्या अलुक् । स्वेन सह ततां रमां प्रति गतिराश्रयः । अर्थान्तरं तूपरि (४५२) ॥

१८५. **अनिरुद्धः–** न केनापि रुद्धः । अप्रतिहतगतिः, सत्यसङ्कल्पश्च । अथाप्यनिभिः प्राणोपासकैः हृद्यवरुद्धः । अनः प्राणोऽस्त्यस्य पुत्र इत्यनी च, भक्त्या रुद्धश्च । अश्च निरुद्धश्च वा । अनिनः प्राणोपासकान् ये रुन्धन्ति तेऽनिरुधः । तानयं हन्ति । ये च न निरुन्धन्ति ताननिरुधोऽयं धत्ते । अधिकमुपरि (६४२) ॥

१८६. **सुरानन्दः–**सुरानानन्दयतीति, सुरं सुरमणं अनं चेष्टां च ददातीति च सुरानन्दः । सुराणामनं ददाति च ॥

१८७. **गोविन्दः–** गां भूमिं विन्दति । पथभ्रष्टां भूमिं स्वकक्ष्यायां स्थापयतीति गोविन्दः । मत्स्यादिरूपेण गां जलं च विन्दति । वृन्दावने गाश्चारयन् विन्दति । गवामिन्द्रो वा गोविन्दः । गाः वेदगिरः वेदयतीति च । गावो वेदयन्त्येनमिति च । देवाः गां स्वर्गं विन्दन्त्यनेन । गां ज्ञानचक्षुर्विन्दन्त्यनेन सात्विकाः । लोकरक्षार्थं गाः सूर्यकिरणान् विन्दति । तत्र सन्निहितो भवति । शत्रुक्षयाय गाश्च बाणान् विन्दति । आदत्त इत्येतत् । गवि भुवि स्वर्गे च विन्दन्त्येनम् । अधिकमुपरि (५४२) ॥

१८८. **गोविदाम्पतिः–** गोविदां वाग्विदां पतिः । गां स्वर्गं विन्दन्तीति गोविदां स्वर्गिणां पतिः ॥ ३३ ॥

**मरीचिर्दमनो हंसः सुपर्ण्णो भुजगोत्तमः ।**
**हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ ३४ ॥**

१८९. **मरीचिः–** जीवानां मिता रुचयः येन स मितरुचिरेव मरीचिः । मरीचिषु किरणेषु गतश्चायमिति मरीचिः । मरीचिमुनौ च गतः । मतिं मदं वा रेचयतीति मरीचिः ॥



१९०. **दमनः–** दुष्टानां दमनाद् दमनः । दमं इन्द्रियनिग्रहं नयति प्रापयति च । मनं मननं द्यति ददाति च । दमश्च नश्च ॥

१९१. **हंसः–** दोषहानाद् हम्, सारानंदत्वात् स इति हंसः । सर्वत्र हंति गच्छतीति हंसः । दुष्टान् हिनस्तीति हंसः । हंसेषु धावल्यदः सन् सन्निहितः । परमहंसेषु च ॥

१९२. **सुपर्ण्णः–** न केवलं हंसे, सर्वेषु पक्षवत्सु पतत्सु सन्निहित इति सुपर्णः । विशिष्य च सुपर्णे गरुडे स्थितः । सुष्ठु परानन्दश्च सुपर्णः । मुक्तेषु सुखपूरणाच्च सुपर्णः । अन्येषामपि सुपरः णः आनन्द येन स सुपर्णः । अधिकमुपरि (८५९) ॥

१९३. **भुजगोत्तमः–** न केवलं सुपर्णेषु, किन्तु भुजगोत्तमेषु च स्थितः । गरुडभुजे गतः सर्वोत्तमः । भुजगानां भुग्नगामिनां वक्रगतीनां सर्पाणामुत्तमः शेषः । तत्र सन्निहितोऽयम् । भुज्यन्त इति भुजान् भोगान् गच्छन्ति ये तेषूत्तमः ॥

१९४. **हिरण्यनाभः–**हितरमणीयनाभिः हिरण्यनाभः । हिरण्मयं ब्रह्मांडाख्यं पद्ममस्य नाभाविति हिरण्यनाभः । हिरण्यवर्णो हिरण्यः 'हि' इत्यव्ययेनापि रण्यते शब्द्यः इति हिरण्यः । न भातीत्यभो जीवः । स न भवतीति नाभः ॥

१९५. **सुतपाः–** सुतपस्सु चायं सन्निहितः । स्वयं च नरनारायणाद्यात्मना लीलया विहितबहुतपाः । रमणीयं चास्य ज्ञानमयं तपः । पूर्णं तप एव यस्य स्वरूपम् । ज्ञानमूर्तिः । सुतं चतुर्मुखं च पाति । सुतान् वा पाति । दशरथादीन् सुतः सन् पाति ॥

१९६. **पद्मनाभः–**द्वितीयं रूपम् । ३४७तमं तृतीयम् । अष्टचत्वारिंशमाद्यम् । पद्मो ब्रह्मा नाभेरस्य सञ्जात इति । अभं न भवतीति नाभं भासमानं पद्मं विश्वाख्यमनेनेति पद्मनाभः । पद्यत इति पद्मः, नाभश्च ॥

१९७. **प्रजापतिः–** प्रजाः पातीति प्रजापः । आनन्दरूपत्वात् तिः । प्रकृष्टः सन्नेव वसुदेवादिभिर्जायत इति प्रजाः । पाति च । प्रकृष्टेषु जायतेऽभिव्यज्यत इति प्रजाः । आनन्दपानाच्च पतिः । प्रकृष्टा अप्यनेन जायन्ते; स्वयं चापतिः ॥ ३४ ॥

**अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः ।**
**अजो दुर्म्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ ३५ ॥**

१९८. **अमृत्युः–** न विद्यते मृत्युरस्य । न भवन्ति रुद्रादयो मृत्युहेतवोऽस्य । अकारवाच्यः सर्वसंहारकः । अमृतिः, उकारवाच्यश्च, उच्चत्वात् । उः शम्भुरनेनामृतिर्मुक्तो भवति ॥

१९९. **सर्वदृक्–** सर्वं पश्यतीति सर्वदृक् । सर्वत्र दृशोऽस्य, विश्वतश्चक्षुः । सर्वेषां दृशश्चक्षूंष्यनेनेति सर्वदृक् ॥

२००. **सिंहः–** अन्ते सर्वं सिंहतीति सिंहः । षिहि हिंसायाम् । सिंहे सन्निहितः । यत्सन्निधानेन सिंहो मृगराजो बभूव । अयमेव च पुरुषसिंहः । सिंह इव चायमसताम् । अधिकमुपरि (४९०) ॥

**॥ इति नाम्नां द्वितीयं शतकम् ॥**

२०१. **सन्धाता–** यङ्कमपि, यत्किमपि, यत्रकुत्रगतमपि परस्परं सन्धत्त इति सन्धाता । कमपि पतित्वेन, कामपि पत्नीत्वेन, पितृत्वेन, मातृत्वेन, पुत्रत्वेन, सखित्वादिना च । कमपि धनेन, कमपि दारिद्र्येण, कमपि विद्यया, कमप्यविद्यया, कामपि रूपेण, कमपि सुखेन, कमपि दुःखेन, कमपि विनयेन, कमप्यहङ्कारेण, वर्णं वर्णेन, पदं पदेन, वाक्यं वाक्येन, वाच्यमर्थेन, अर्थं वाचा, भुवं दिवा, सर्वं सर्वेण सन्धत्ते । एवं सन्दधत् सम्यग् लोकान् धत्ते ॥

२०२. **सन्धिमान्–** अक्षरयोः सन्धौ स्थितः नूतनमर्थमाविष्करोति । स्त्रीपुंसयोः सन्धौ च मैथुनकर्मणि गतः नूतनं चेतनमाविष्करोति । एवं तेजोबन्नानां



सन्धौ स्थितः त्रिवृत्करणेन नूतनं पदार्थजातमाविष्करोतीत्यद्भुतमहिमाऽयं सन्धिमानुच्यते ॥

२०३. **स्थिरः–** गुणक्रियादिभिः सदा स्थिरत्वात् स्थिरः । सर्वत्र स्थितो रमत इति स्थिरः । स्थितेषु स्थावरेषु रमत इति स्थिरः । स्थितिं रातीति स्थिरः । स्वस्मिन् स्थितेषु भक्तेषु रमत इति स्थिरः ॥

२०४. **अजः–** द्वितीयं रूपम् । ९५तममाद्यम् । ५२३तमं तृतीयम् । अजं ब्रह्माणमजति गच्छतीत्यजः । अजति सर्वत्र गच्छति सर्वमवगच्छतीति चाजः । अजति क्षिपति दुष्टांस्तमसीत्यजः । अज गतिक्षेपणयोः । मुक्ता न पुनर्जायन्ते येन सोऽजः । अजेषु बस्तेषु स्थितश्चायम् । अकारवाच्यः सर्वजनकश्च ॥

२०५. **दुर्मर्षणः–** न मर्षणीयं केनाप्यस्य पौरुषमिति दुर्मर्षणः । दुर्मर्षान् नमयतीति च । मृष तितिक्षायाम् ॥

२०६. **शास्ता–** सर्वान् लोकान् शास्तीति शास्ता । यमशासनात् तारयतीति शास्ता । शस्ति तारयति चेति शास्ता ॥

२०७. **विश्रुतात्मा–**सर्वशास्त्रेषु विश्रुतः आत्मा स्वरूपमस्येति विश्रुतात्मा । विश्रुतश्चाऽत्मा च । विश्व श्रुतश्चाऽत्मा च । विहितश्रुतानां विगतश्रुतानां चायमेवाऽत्मा ॥

२०८. **सुरारिहा–** सुरारीन् हन्तीति सुरारिहा । सुरमणात् सुरश्च, भक्तानामरिहा च । सुरारीनपि हन्ति गच्छति नियन्तुम् ॥ ३५ ॥

**गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।**
**निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ ३६ ॥**

२०९. **गुरुः–**जगद्गुरूणामपि गुरुः । अस्य गुणा वेदेषु रुताः । गुरौ बृहस्पतौ स्थितः । वेदान् गिरति उद्गिरति । अज्ञानं गिरति । अणोरणीयान्, अथापि पर्वतादपि गुरुः ॥

२१०. **गुरुतमः**–अत एव गुरुतमः । गुरुषु ततो ज्ञानरूपः । गुरवोऽपि ताम्यन्त्यनेन । महतोऽपि महीयानिति च ॥

२११. **धाम**– सर्वेषां धाम आश्रयः । सर्वगुणानां च धाम । ज्योतिर्मयत्वाच्च धाम । मुक्तानां च परमं धाम । धारकं चामेयं च ॥

२१२. **सत्यः**–द्वितीयं रूपम् । १०६तममाद्यम् । ८७३तमं तृतीयम् । अवितथवागिति सत्यः । सदिति प्राणः । तीति ब्रह्मा । सृष्ट्याद्यर्थं तौ ब्रह्मवायू यातीति सत्यः । तीत्यानन्दः । यमिति ज्ञानम् । सदिति निर्दुष्टं ज्ञानानन्दमयमस्य स्वरूपमिति सत्यः । सच्चिदानन्द इत्येतत् । सतीषु सतीत्वं द्रढयन् स्थित इति सती च अश्च । सत्सु गतः सत्त्यः ॥

२१३. **सत्यपराक्रमः**– अस्य पराक्रमोऽप्यवितथ इति सत्यपराक्रमः । सत्यपराः सत्यनिष्ठाः । तान् न क्रामति किन्त्वनुसरतीति सत्यपराक्रमः । सत्यश्च, परान् दैत्यानाक्रमत इति पराक्रमश्च । सत्याय पराक्रमोऽस्य । सत्यं जगत् पिपर्ति पालयतीति सत्यपरः । सत्यनिष्ठो वा सत्यपरः । स्वनियतिं स्वयमपि न क्रामतीति अक्रमः । सत्यश्च, परश्च, अक्रम आक्रमश्च वा । मुनेर्विशालस्य सतीमपरां इतरां सुतः सन्ननु क्रामत्यनुसरतीति सत्यपराक्रमो महिदासः ॥

२१४. **निमिषः**– प्रळये निमीलितनयनः शेत इति निमिषः । निमिं राजानं सरति नियन्तुम् । निमयस्तद्वंश्यास्तानपि सरति । जगन्निमिषत्यनेन । निमिषगतश्चायम् । नयनान्नीत्युपसर्गवैद्यः । सुरासुरा मिषन्ति स्पर्धन्तेऽनेनेति च निमिषः । नितरां मिषन्त्यनेन वा । मिष स्पर्धायाम् ॥

२१५. **अनिमिषः**–वस्तुतः कदाऽपि न निमिषति नित्यजागृतत्वादित्यनिमिषः । न निमिषन्ति सुरा अनेन । न स्पर्धन्ते च ॥

२१६. **स्रग्वी**– वनमालाधरः स्रग्वी । ब्रह्माण्डाख्यपङ्कजमाली च । रत्नमाला, स्वर्णमाला, पुष्पमालेत्याद्या बहुविधा अस्य स्रजो भवन्ति ॥



२१७. **वाचस्पतिः**– वचसां वाच्यमुत्तममिति वाचस्पतिः । सकलवाग्देवताया रमायाः पतिः । समस्तवेदवाचां पालकः । अधिकमुपरि (५७७) ॥

२१८. **उदारधीः**– उदारा धीरस्येति उदारधीः । 'उदारो दातृमहतोः' । उदारा उद्गतदोषा धीरस्य । उदाराणां महतामपि धीरनेन । उदारैरपि हृदि निधीयते । उदानां जीवसङ्घानां आ समन्तादू रमणम्, अरमरमणम्, धीश्चानेन । अभीष्टदानादुदारः, ज्ञानरूपत्वादू धीश्च ॥ ३६ ॥

**अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।**
**सहस्रमूर्द्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ ३७ ॥**

२१९. **अग्रणीः**– अग्रं स्थानं नयति भक्तान् । अग्रे चायं प्रणीयते भक्तैरित्यग्रणीः । अग्रश्चायं नेता च । अग्रणीषु गतः ॥

२२०. **ग्रामणीः**– चेतनाचेतनग्रामं नयति ग्रामणीः । गुणग्रामं नयति । ग्रामणीषु गतः ॥

२२१. **श्रीमान्**– श्रीमानिति तृतीयं रूपान्तरम् । १७८तमं द्वितीयम् । द्वाविंशमाद्यम् । ६१७ तमं तुरीयम् । श्रीपतिः श्रीमान् । वेदपतिः कान्तिमान् वा ॥

२२२. **न्यायः**–नितरामायो लाभरूपोऽयं भक्तानाम् । सर्वन्यायानामयमेव विषय इति च । नितरामाययति प्रापयति तत्तद्योग्यम् । दुष्टान् नीचैराययति ।

२२३. **नेता**– सर्वजगन्नेता नेता । नेतरि गतश्च ॥

२२४. **समीरणः**– ब्रह्मरुद्रादीनप्ययमेव सम्यगीरयतीति समीरणः । समीरमपि नयति । सं चेरणश्च । समीरणे स्थित्वा तस्य तन्नामताप्रदः ॥

२२५. **सहस्रमूर्द्धा**– अनन्तशीर्षत्वात् सहस्रमूर्धा । अनन्तस्य शेषस्य सहस्रं मूर्धानो यस्मात् ॥

२२६. **विश्वात्मा–** पूर्ण आत्माऽस्येति विश्वात्मा । विश्वस्मिन्नाततश्चा-यम् । विश्वमत्ति चायमन्ते । विश्वस्य वायोरप्यन्तर्यामी चायम् । विश्वेषां चाऽत्माऽयम् ॥

२२७. **सहस्राक्षः–** अनन्तान्यक्षीणि अक्षाणि वाऽस्येति सहस्राक्षः । सहस्रमनन्तं विश्वमक्ष्णोति च ॥

२२८. **सहस्रपात्–**अनन्ताः पादा अप्यस्येति सहस्रपात् । अनन्ताः पादा अवताराश्चास्य । सहस्रं विश्वं पाति चात्ति चेति सहस्रपात् ॥ ३७ ॥

**आवर्त्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः ।**
**अहःसंवर्त्तको वह्निरनिलो धरणीधरः ॥ ३८ ॥**

२२९. **आवर्त्तनः–** जीवान् संसार आवर्तयतीत्यावर्तनः । आ समन्ताद् वर्तते । आ समीचीनं वर्तनमस्य । जगतां सूर्यचन्द्रादीनां वा आवर्तं नयति ॥

२३०. **निवृत्तात्मा–** स्वयं तु सर्वतो निवृत्तात्मा । अनेन च सर्वेऽप्यात्मानः संसारान्निवृत्ता भवन्ति । निवृत्तिमार्गगता अस्याऽत्मानः अन्तरङ्ग-भूता इति निवृत्तात्मा । 'ज्ञानी त्वात्मैव मे मतम्' इति हि भग-वद्वचनम् । अधिकमुपरि (६०२) ॥

२३१. **संवृतः–** संसारिणां सदा पिहित इति संवृतः । अथ च सद्भिः सदा समावृतः । हृदयगुहायां चावृतः । सं च ज्ञानिभिर्वृतश्च ॥

२३२. **सम्प्रमर्दनः–** प्रळये सर्वं जगत्सम्प्रमर्दयति । दुष्टान् सम्प्रमर्दयतीति च सम्प्रमर्दनः । सं च प्र च मर्दनश्च । जनसम्मर्दं तेषां परस्परं प्रमर्दं च नयति ॥

२३३. **अहःसंवर्तकः–** सूर्यगतः सन् अह्नां प्रवर्तक इत्यहःसंवर्तकः । सूर्यगतश्च भगवानहरित्युच्यते । सूर्ये गतः सन् सम्यग् जगद् वर्तयति । अहश्च सं च वर्तकश्च ॥



२३४. **वह्निः–**हविषां वहनात्, सर्वस्य च वहनात् वह्निः । वह्निगतश्चायम् । वहति नयति चायम् ॥

२३५. **अनिलः–** नास्ति निलयनमस्येत्यनिलः । अनस्वामीत्यनी च लाति च । अश्च निलीयते सर्वमत्रेति निलश्च । अश्च नेतृत्वान्निश्च लातीति लश्च। अनिनः प्राणोपासकान् लाति चायम् । अधिकमुपरि (८१६)॥

२३६. **धरणीधरः–** धरणी सर्वधराऽनेन । धरणीं धत्ते, सदा कूर्मः सन्, वायुकूर्मशेषादिषु सन्निहितश्च सन्, यथा स्वपथान्न पतति । वराहरूपेण च धत्ते । भूनाम्नीं रमां च धत्ते । धरान् नयतीति धरणीः । स्वयं च सर्वधारकः । धरणीधरेषु गतश्च ॥ ३८ ॥

**सुप्रसादः प्रसन्नात्मा विश्वधृग् विश्वभुग् विभुः ।**
**सत्कर्त्ता सत्कृतिः साधुर्ज्जह्नुर्न्नारायणो नरः ॥ ३९ ॥**

२३७. **सुप्रसादः–** सुकृतिषु सम्यक् प्रसीदति इति सुप्रसादः । सु च प्र च सादयतीति सादश्च ॥

२३८. **प्रसन्नात्मा–** सदा प्रसन्नः आत्मा स्वरूपमस्य; आत्मानश्चानेन प्रसन्ना इति प्रसन्नात्मा । प्रसन्नश्च आत्मा च । केचिदात्मानः प्रकर्षेण सन्नाश्चानेन ॥

२३९. **विश्वधृक्–** प्रगल्भोऽयं जगत्पालने । विश्वं धृष्णोतीति विश्व-धृक् । ञि धृषा प्रागल्भ्ये । विश्वस्य धारणाच्च विश्वधृक् । 'विश्वसृट्' इति केचित् ॥

२४०. **विश्वभुक्–** विश्वं भुनक्ति पालयति स्थितिकाले, भुङ्क्ते प्रळयकाले चेति विश्वभुक् ॥

२४१. **विभुः–** विभवति, विविधरूपश्च भवति, विशिष्टश्च भवति, विलक्षणश्च भवति । वौ गरुडे च स्थितो भवति ॥

२४२. **सत्कर्त्ता–** सूक्ष्मं जगत् सत् स्थूलं करोति । सदा सत् सत्यमेव करोति, नासत्यम् । सदा मान्यान् स्वयमपि सत्करोति मानयति चेति सत्कर्ता । सदिति प्राणः । तस्यापि सृष्ट्यादिकर्ता । सतः सज्जनान् सतः मुक्तान् करोति । सन् कर्ता चायम् ॥

२४३. **सत्कृतिः–**सतां कृते कृतयोऽस्य । सन्ति ज्ञानसाधनानि पुराणानि चास्य कृतिः । सती कृतिरस्य । सन्नयं कृतिरूपश्चायम् । अधिकमुपरि (७०४) । 'सत्कृतः' इति केचित् ॥

२४४. **साधुः–** सद्गुणभरितत्वात् साधुः । साधयति सर्वमिति साधुः ॥

२४५. **जह्नुः–** जहाति दोषानिति जह्नुः । जहाति दुष्टान् नयति साधूनिति च । जयति जायते च, हन्ति हूयते च, नयति नीयते च ॥

२४६. **नारायणः–** नारं नीरमयनमस्येति नारायणः । नाराणि, नराज्जातानि तत्वानि नाराणि । तेषामयमयनः, तानि चास्यायनानि । अराः दोषाः, तेषामयनो न भवतीति नारायणः । नारा गुणास्तेषामयनश्च । नाराः नरेषु गतास्तत्वमानिनः सुराः । तेषामयमयनः । नारा मुक्ताः, तेषामयनः । नरसमुदायो नारम् । तेनेयते । तस्यायमयनं पन्थाः । नारं निर्दोषं ज्ञानम्, तेनेयते गम्यते । निर्दोषत्वान्नारश्चायं सर्वेषा-मयनश्च । नराणामयन एव नारायण इति च ॥

२४७. **नरः–** नयतीति नरः । न रीयते च । रीङ् क्षये । दुष्टान् न रमयति च । नयति रमयति च । नरगतश्च नरः ॥ ३९ ॥

**असङ्ख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।**
**सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥ ४० ॥**

२४८. **असङ्ख्येयः–** न सङ्ख्येया गुणा अस्येति । न सङ्ख्येयं किमप्यस्मि-न्निति । असङ्ख्यरूपश्च असङ्ख्य इतीयते । अश्च सङ्ख्यया तत्वविद्यया ईयते च ॥



२४९. **अप्रमेयात्मा–** अपरिमितः अप्रमितश्च अस्याऽत्मा । अप्रमेयश्चाऽत्मा च । अश्च प्र च ज्ञानिभिर्मेयात्मा च । अधिकं प्रकृष्टः, मेया जीवात्मानोऽनेन च ॥

२५०. **विशिष्टः–** सर्वस्माद् विशिष्टः । नास्ति किमपि अवशिष्टं गुणजातं यदत्र न विद्यते । विश्च सर्वान्ते शिष्टश्च । वयो ज्ञानिनः शिष्टा अनेन । सर्वत्र विष्टः, शिष्टश्चान्ते ॥

२५१. **शिष्टकृत्–** सर्वं जगदनुशिष्टं करोति । सतः शिष्टान् करोति । शिष्टानपि कृन्तति । अन्ते यदवशिष्टं तत् स्वोदरे करोति ॥

२५२. **शुचिः–** शुचिरिति द्वितीयं रूपम् । १५५तममाद्यम् । शं सुखं तच्छीलः, हृदि चितश्च शुचिः । शुभं चिनोतीति शुचिः । दैत्यानां शुचं चिनोति ॥

२५३. **सिद्धार्थः–** सर्वेऽर्थाः सिद्धा एवास्येति सिद्धार्थः । सिद्धरूपोऽयं सर्वशब्दार्थः । एतेन सिद्धे व्युत्पत्तिरिति सिद्धान्तयति । सिद्धा-नामेकान्तानामर्थरूपश्चायम् । सिद्धैरर्यते अर्थ्यते वा ॥

२५४. **सिद्धसङ्कल्पः–** यतः सत्यसङ्कल्पः, तत एव सिद्धसङ्कल्पः । ज्ञानसिद्धैः सम्यक् कल्पितः । सिद्धश्च सङ्कल्पश्च । सिद्धश्च सम्पूर्णगुणश्च, वेदाङ्गेषु कल्पेष्वपि वाच्यतयाऽयमेव गत इति च ॥

२५५. **सिद्धिदः–** अन्येषां कार्यसिद्धिमयमेव ददाति । द्यति चासताम् ॥

२५६. **सिद्धिसाधनः–** ततः फलनिष्पत्तिं चायमेव साधयति । असतां सिद्धिं नाशयति च । सिद्धिगतः साधनगतश्च ॥ ४० ॥

**वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।**
**वर्द्धनो वर्द्धमानश्च विविक्तः श्रुतिसागरः ॥ ४१ ॥**

२५७. **वृषाही–** धर्ममयान्यहान्यस्य सन्तीति वृषाही । अभीष्टवर्षणान्यहेयान्यनन्तरूपाण्यस्येति वृषाही । वृषं चाहिं च एतीति । इण् गतौ । इच्छति वा ॥

२५८. **वृषभः–** वर्षत्यभीष्टमिति वृषभः । वृषेण धर्मेण सह भातीति वृषभः । वृषभेषु गतश्च वृषभः । वृषश्च भश्च । वृषभावतारश्च भरतस्य राज्ञः पिता ॥

२५९. **विष्णुः–** विष्णुरिति द्वितीयं रूपम् । द्वितीयमाद्यम् । ६६१तमं तृतीयम् । विशत्ययं सर्वमिति, विशत्यस्मिन् सर्वमिति च विष्णुः । विविधं विशिष्टं विलक्षणं च सनोति । वेः गरुडस्य, वीनां ज्ञानिनां च षं प्राणशक्तिं नुदति । विश्व षड्गुणश्च, सर्वप्रेरक आनन्दशीलश्च वा ॥

२६०. **वृषपर्वा–** साधनप्रासादमारोढुं वृषरूपाणि सोपानपर्वाण्यस्य । अभीष्टवर्षणानि पर्वदिनान्यस्य ॥

२६१. **वृषोदरः–** अभीष्टवर्षणाद् वृषः । उदान् जीवसङ्घान् रमयतीति उदरः । उद्गातारो वा वृषः धर्ममानी ब्रह्मा वायुर्वा यस्योदरे ॥

२६२. **वर्द्धनः–** वर्धयति सर्वम्, छिनत्ति वा । वः ज्ञानाख्यं धनमस्य । 'वरिति ज्ञानमुच्यते' ॥

२६३. **वर्द्धमानः–** सदा वर्धमान एव । न कदाऽपि वृद्धो नापि वर्धिष्यते । वरैरपि धृतं मानं ज्ञानं यस्य । वरैर्धृतमानो विहितपूजो वा । ज्ञानानन्दरूपत्वाद् वरः;धारकत्वाद् धश्च इति माननीयः । वायुना ऋद्धं प्रततं मानं ज्ञानमस्य । वेन आनन्दाख्येन बलेनर्द्धं ज्ञानमस्य स्वरूपम् ॥

२६४. **विविक्तः–** सर्वतो विलक्षणः । विविक्त एकान्ते गतः । श्रुतिभिर्विविच्य निरूपितः ॥



२६५. **श्रुतिसागरः–**सर्वश्रुतीनां नदीनां सागर इवायमगारः । श्रुतिभिः, श्रुत्या श्रवणेन वा सारं गमयतीति सारग एव सागरः । सागस्कानपि रमयति वा । अगमज्ञानम् । सागानज्ञानपि रमयति वा । श्रुतिगतः श्रुतिः । सागरगतः सागरः ॥ ४१ ॥

**सुभुजो दुर्द्धरो वाग्ग्मी महेन्द्रो वसुदो वसुः ।**
**नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ ४२ ॥**

२६६. **सुभुजः–** शोभनभुजः । सुखमेव भुङ्क्ते । सुजनानेव भुनक्ति ॥

२६७. **दुर्द्धरः–** दुःशकोऽयं दुष्टैर्ध्यानयोगे हृदि धारयितुम् । ये तपआदिना दुःखं दधति ते दुर्धा दुःखिताः । तानयं रमयति । यान् पृथिवी दुःखेन धारयति ते दुर्धा दुर्जनाः । तानयं राययति नाशयति । रि हिंसायाम् । अधिकमुपरि (७१९) ॥

२६८. **वाग्ग्मी–** आदौ वेदानां वक्ता । सर्वांतः स्थितश्चायमेव वक्तीति वाग्ग्मी । वाचं गमयति । वाचा गीयते मीयते च । वाचां ग्मा भूमिरधिष्ठानं वेदवाङ्मयम् । वाचकत्वेन तद्वानयं वाग्ग्मी ॥

२६९. **महेन्द्रः–** ईश्वराणामपि महानयं परमेश्वरः । इन्द्राद् वायोरपि महानिति महेन्द्रः । असुराणामिष्टं द्रावयन् इदं द्रवतीतीदन्द्रः । इदमद्राक्षीदितीदन्द्रः । महानयमिदन्द्रो महेन्द्रः ॥

२७०. **वसुदः–**नित्यमनित्यं च वसु ददाति । वरसुखदः । वरदः सुखदः । वसु द्यति चासताम् । भक्तानां वं ज्ञानं सुष्ठु ददाति । वीराणां वं बलं सुष्ठु ददाति । अयोग्यानां ते द्यति च ॥

२७१. **वसुः–**द्वितीयं रूपम् । ७००तमं तृतीयम् । भक्तानां शाश्वतं वसु । आत्मानं वस्ते । वसति च सर्वत्र । वरसुखः । ज्ञानानन्दमयः । बलानन्दमयः ॥

**२७२. नैकरूपः–** भक्तानामुद्दिधीर्षया लीलया धृतानन्तरूपः। नकारवाच्यमेकं बुद्धाख्यं रूपमस्य ॥

**२७३. बृहद्रूपः–** गुणैर्बृहन्ति चास्य तानि सर्वाणि रूपाणि। अणून्यपि बृहन्ति भवन्ति। बृहन्ति बृहत्त्वेन रूपयन्ति। बृहतां रूपाण्यनेनेति च ॥

**२७४. शिपिविष्टः–** शिपिषु पशुषु विष्टः शिपिविष्टः। शिपिषु रश्मिषु वा निविष्टः। केशा अपि शिपय उच्यन्ते। तेषु विष्टः स्त्रीणां सौन्दर्यवर्धनः। रामकृष्णात्मनाऽवतारार्थं शुक्लकृष्णकेशाभ्यां मातुरुदरं प्रविष्टः। केवलानन्दपानात् शिपयो मुक्ताः। तेषु विष्टः। शिवं शुभं पिबतीति च शिपिः। शिपिश्च विष्टश्च वा ॥

**२७५. प्रकाशनः–**सर्वं प्रकाशयतीति प्रकाशनः। अप्रकाशं प्रकाशं नयति। सूर्यादिप्रकाशान् नयति। प्रकः प्रकृष्टानन्दः सर्वाशनश्च। प्रकृष्टश्च काशनश्च। कमश्नाति च ॥ ४२ ॥

**ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः।**
**ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ४३ ॥**

**२७६. ओजस्तेजोद्युतिधरः–**ओजः पराभिभवनशक्तिः। परैरधृष्यता तेजः। अनन्तसूर्याधिका द्युतिश्चास्येति ओजस्तेजोद्युतिधरः। येय ओजोधरास्तेजोधरा द्युतिधरा वा तेषामयमेको धारयिता। स्वयमोजोरूपः, तेजोरूपः, द्युतिरूपः, धरेषु पर्वतेषु स्थित्वा तन्नामा च ॥

**२७७. प्रकाशात्मा–** प्रकाशस्वरूपः। सर्वानात्मनः प्रकाशयति च। सूर्यादीनां प्रकाशमातनोति। स्वयं प्रकाशतेऽत्ति च सर्वम् ॥

**२७८. प्रतापनः–** शत्रून् प्रतापयतीति प्रतापनः। अग्नौ सूर्ये च स्थित्वा च प्रतापनः। अयमेव प्रकृष्टस्तापनः। अन्ये चैतद्दत्तया शक्त्या। सर्वेषां प्रतापमयं नयति ॥



**२७९. ऋद्धः–** सर्वैर्गुणैः समृद्धः। ऋतधारणाच्चायमृद्धः। अधिकमुपरि (३५२) ॥

**२८०. स्पष्टाक्षरो मन्त्रः–**स्पष्टं ओमित्येतदक्षरमस्य वाचकमिति स्पष्टाक्षरः। सर्वाण्यप्यक्षराणि स्फुटमस्य वाचकानीति च। स्पष्टानि ओंनमो नारायणायेत्यष्टावक्षराणि। विष्णवे नम इति षडक्षराणीत्यादि। वेदमन्त्रगतत्वात् मन्त्रः। ये मन्वते तांस्त्रायते। मननेन वा त्रायते। ऐकपद्ये च स्पष्टाक्षरैः ओङ्कारादिभिः उमं उत्कृष्टज्ञानिनं त्रायत इति स्पष्टाक्षरोमन्त्रः। 'ओमासश्चर्षणीधृतः' इति हि श्रुतिः। स्पष्टानि स्फुटं भगवद्वचनानि अक्षराणि येषु तैः उत्कृष्टैः मन्त्रैर्वा त्रायते। स्पष्टाक्षरश्च उमन्त्रश्च वा ॥

**२८१. चन्द्रांशुः–** चन्द्रांशुरिव शीतलः सताम्। चन्द्रांशुषु चायं सन्निहितः। चन्द्रा आह्लादकाश्चास्यांशवः ॥

**२८२. भास्करद्युतिः–** अथापि भास्कर इव द्योतते। पापिनामातप इव। साधूनां चन्द्रिकेव। भास्करोऽप्यनेन द्योतते। भास्करस्य द्युतिरप्यस्यैव। 'तस्य भासा सर्वमिदं विभाति'। भास्करे स्थित्वा भास्करनामा, द्युतिरूपश्चायम् ॥ ४३ ॥

**अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः।**
**औषधं जगतःसेतुः सत्यधर्म्मपराक्रमः ॥ ४४ ॥**

**२८३. अमृतांशूद्भवः–**अमृतांशोः चन्द्रस्यापि उद्भवः यस्मात्, अमृताः मुक्ताः सन्तः अंशवः भिन्नांशाः जीवा अस्मादेव संसारादुद्गता भवन्ति। अमृतांशुश्च उद्भवश्च ॥

**२८४. भानुः–**भानुगतो भानुः। भातीति भानुः। भासं नुदतीति भानुः। भासा तमो नुदतीति। भश्च अननादनुश्च। भश्च अश्च नुश्च ॥

**२८५. शशबिन्दुः–** शशबिन्दुः शशाङ्कः। तद्गतत्वात् शशबिन्दुः। सुखसुखः शशः। विन्दति सर्वमिति विन्दुः। स चायं स च शशबिन्दुः ॥

२८६. **सुरेश्वरः–** सुराणामपीशा ब्रह्मादयस्तेषामप्ययं वरः । सुराणामीशा श्रीः । तस्या अयं वरः । सुरश्चायमीश्वरः ॥

२८७. **औषधम्–** भवरोगस्यौषधम् । उष्टानां निधिरौषधम् । औ उकारवाच्ये स्वरूपे षड्गुणान् धत्ते । औ शम्भौ षं विषं धत्ते ॥

२८८. **जगतःसेतुः–** जगतः संसारशरधितरणे सेतुरिव सेतुरयम् । जगति गतः सेतुश्चायम् । जगदिति वायुः । तस्य सेतुराश्रयः ॥

२८९. **सत्यधर्मपराक्रमः–** सत्येन धर्मेण च वायो रूपद्वयेनाङ्गभूतेन पराना-क्रमते । सत्यश्चायं सर्वधारणात् धर्मश्चायम् । धर्मसंस्थापनार्थाय परानाक्रमते चायम् । सत्याश्चास्य धर्मा आनन्दादयः पराक्रमश्च । सत्यधर्माणं भक्तं रक्षति परानाक्रम्येति । सत्यधर्मपराणां मनस्याक्रम्य तिष्ठति । स्वयं सत्यधारणात् सत्यधर्मः, परेषामसत्यप्रियाणामक्रमश्चानेन ॥ ४४ ॥

**भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।**
**कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः ॥ ४५ ॥**

२९०. **भूतभव्यभवन्नाथः–**भूतानां भविष्यतां भवतां चायमेक एव नाथः । भूतभव्यभवंश्चायं नाथः ॥

२९१. **पवनः–** पवनगतः । पवते चायम् । पवन्ते चानेन वातादयः ॥

२९२. **पावनः–**पावयति सर्वमिति पावनः । पश्चावनश्च । अवश्च नश्च वा । अधिकमुपरि (८१५) ॥

२९३. **अनलः–** न विद्यते अलं पर्याप्तिरस्य गुणानामित्यनलः । अनं लाति । अने लीनः । अश्च नश्च लश्च । अधिकमुपरि (७१५) ॥

२९४. **कामहा–** असतां कामान् हन्ति । कामं नियन्तुं गच्छति । कुत्सितममम-ज्ञानं हन्ति । कुत्सिता अमा अविद्या येषां ते कामाः । तान् तमसि



निपात्य हन्ति । कुत्सिता मा येषां ते कामा मिथ्याज्ञानिनः । तान् हन्ति वा । कस्य वायोर्ब्रह्मणो वा अममज्ञानं हतवान् ॥

२९५. **कामकृत्–** सतां कामान् करोति । कृन्तति चासताम् । प्रद्युम्नं करोति, कृन्तति नाशयति च शिवनेत्रगः ॥

२९६. **कान्तः–** कमनीयः । इच्छामयो वा । कौ ब्रह्मवायू जीवकोट्यन्तगा-वनेन । अधिकमुपरि (६५८) ॥

२९७. **कामः–** सर्वैरपि काम्यत इति कामः । अमं अमितं कं सुखमस्य । जीवगणेष्वमितं सुखं ब्रह्मवाय्वोरनेन । कश्च अमश्च । अमितत्वादमेय-त्वाच्च । कश्च अश्च मश्च वा । कामगतश्च कामः । इच्छारूपश्च ॥

२९८. **कामप्रदः–** यतः सर्वेषां सर्वाण्यपि कामितान्ययमेव प्रददाति । प्रद्यति च । कामश्च प्रदश्च ॥

२९९. **प्रभुः–** द्वितीयं रूपम् । पञ्चत्रिंशमाद्यम् । प्रकर्षेण भाति च । प्र च भाति च । सर्वेभ्यः पर उत्तमो भवति । आनन्दरसपानेन रममाणो भवति । परेऽपि भवन्ते उत्पद्यन्तेऽनेन ॥ ४५ ॥

**युगादिकृद् युगावर्त्तो नैकमायो महाशनः ।**
**अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ४६ ॥**

३००. **युगादिकृद्–** स्त्रीपुंसयोगेन सन्ततेरादिं करोति । युगानामाद्य-प्रवर्तकश्च । सदा श्रिया युज्यते, आदिकृच्च । ब्रह्मवाय्वोर्युगमादौ करोति । ब्रह्मसरस्वत्योर्वा । स्त्रीपुंसयोर्युगं क्वचिदादत्ते । क्वचित् कृन्तति । युगं द्वन्द्वम्– सुखदुःखे, लाभालाभौ, जयाजयौ, विद्याविद्ये, जन्ममृत्यू इति । तस्याऽदिः कारणं संसारः । तत् करोति च कृन्तति च ॥

**॥ इति नाम्नां तृतीयं शतकम् ॥**

३०१. **युगावर्त्तः–** युगानि कृतादीनि पर्यायक्रमेणाऽवर्तयति । देवतासु स्त्रीपुंसयोर्युगं गणश आवर्तयति । निरन्तरमावर्तयति च । नहि स्त्री पुमान् भवति । पुमान् वा स्त्री । सुखदुःखयोर्द्वन्द्वं चक्रवत् परिवर्तयति च ॥

३०२. **नैकमायः–** अनेका मायाः सामर्थ्यान्यस्येत्यनन्तमहिमा नैकमायः । अनन्तेच्छः, अनन्तज्ञानश्च । स्वरूपाच्छादिका परमाच्छादिका चेति नैका द्विविधा माया यस्य । नैकाः संसारे मोहिन्यो मायाः यस्मात् । नैका स्वरूपतो भगवतोऽन्या माया लक्ष्मीर्यस्य परिग्रहः । अथचैकशब्दोऽन्यवचनः । नैका भगवताऽनन्या माया सामर्थ्यं यस्य । अनन्येच्छः । अनन्यज्ञानश्च । नैकः अनेकरूपः । अथापि नैकोऽभिन्नः । मां प्रमां रमां वाऽयत इति मायः । नश्च एकश्च मश्च अयश्च ॥

३०३. **महाशनः–** कल्पान्ते सर्वात्तृत्वान्महाशनः । महदश्नन्तीति महाशा ब्रह्मादयस्तानयं नयति । महांश्चायमशनः । महच्च शमस्य, नेता च । महच्च शं ययोर्ब्रह्मवाय्वोस्तावप्ययं नयति । महती आशा येषां तानप्ययं नयति । महमुत्सवमश्नुते व्याप्नोति । अश्नात्यनुभवति च । महनीयानप्यश्नुते ॥

३०४. **अदृश्यः–** न दृश्यते बाह्यचक्षुषेत्यदृश्यः । अश्च दृश्यश्च योगिनां हृदये इत्यदृश्यः ॥

३०५. **व्यक्तरूपः(अव्यक्तरूपः)–** अत एव ज्ञानिनां हृदयकमले व्यक्तरूपः । चकारेण अव्यक्तरूपश्च । 'व्यक्ताव्यक्तस्वरूपः' इत्यन्यत्र । तदेतद् ग्राहयितुमेव चकारः । अत एव अकारवाच्यः दृश्यश्चेति पूर्वनाम्नोऽर्थान्तरं च । एकस्यैव रूपस्य नामद्वयम् । व्यक्तश्च । रूपयति जगदिति च । जगतो रूपमनेन व्यक्तम् । अव्यक्तं चायमेव रूपयति । व्यक्तं अनक्तं निर्लिप्तं रूपमस्य । विषु ज्ञानिषु सक्तं रूपमस्य । वौ गरुडे वा ॥



३०६. **सहस्रजित्–** सहस्रं शत्रूनक्षिपातमात्रेण जयतीति सहस्रजित् । भक्तानामपि सहस्रं प्रीत्या जयतीति सहस्रजित् । सर्वोत्कर्षाच्च सहस्रजित् । सहस्रमक्षयं जयति प्राप्नोति । जीवेन सह सरति जयति च । सहस्रेण रूपाणां सर्वं जयति । सहते सरति जयति च ॥

३०७. **अनन्तजित्–** न सहस्रशब्दः सीमितवचनः । किन्त्वनन्तजित्त्वादेव सहस्रजित् । अनन्तश्च जिच्च । अनमपि तनोति जयति च ॥ ४६ ॥

**इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।**
**क्रोधहा क्रोधकृत् कर्त्ता विश्वबाहुर्म्महीधरः ॥ ४७ ॥**

३०८. **इष्टः–** सर्वेषामिष्टः । इज्यते च सर्वैः ॥

३०९. **अविशिष्टः (विशिष्टः)–** सर्वरूपेष्वेकरूपतया अविशिष्टः । न विद्यते विशिष्टोऽस्मादिति च । अधिकं विशिष्टो वा । अवतीत्यविः । प्रळयकालेऽवशिष्टश्च । अविभिर्ब्रह्मादिभिरनुशिष्टः । अश्च विशिष्टश्च । अथच सर्वस्माद् विशिष्टः ॥

३१०. **शिष्टेष्टः–** शिष्टानामयमिष्टः । शिष्टाश्चास्येष्टा इति शिष्टेष्टः । शिष्टैरिष्टश्च यज्ञैः । अन्ते शिष्टेनैकेन ब्रह्मणेष्टः पूजितः । शिष्टश्च इष्टश्च ॥

३११. **शिखण्डी–** शिखण्डो बर्हः । बर्हिबर्हावतंसः शिखण्डी । शिखण्डः केशपाशः अस्त्यस्येति वा शिखण्डी । शिखण्डिनि स्थित्वा बलमस्य ददौ । तुम्बुरुद्वारा पुंस्त्वं च । शिखण्डिषु बर्हिषु गतश्च । दुर्जनान् शित्वाशित्वा खण्डयति । शो तनूकरणे । सुखरूपत्वात् शी च, सतामसुखस्य, असतां सुखस्य च खण्डनात् खण्डी च ॥

३१२. **नहुषः–** जगद् बध्नातीति नहुषः । णह बन्धने । नहुषे स्थितश्च । नहून् जगद्बन्धकान् स्यति चायम् । षो अन्तकर्मणि ॥

३१३. **वृषः–**अभीष्टवर्षणाद् वृषः । वृतषड्गुणश्च । वरणीयः सर्वेचेष्टकश्च ॥

३१४. **क्रोधहा–** जितकामानां क्रोधं हन्ति । क्वचित् क्रोधेन हन्ति गच्छति, भीष्ममिव रथाङ्गपाणी रथादवप्लुत्य ॥

३१५. **क्रोधकृत्–**कामिनां क्रोधं जनयति । स्वयं च दुष्टेषु क्रोधं करोति । सतां क्रोधं कृन्तति ॥

३१६. **कर्त्ता–** सर्वकर्ता । सर्वस्य कर्तनाच्च । करोति तारयति च । अधिकमुपरि (३८१) ॥

३१७. **विश्वबाहुः–** विश्वतोदिशं बाहवोऽस्य । गुणपूर्णबाहुः । विश्वेषां बलमस्मिन् महाबले आहुतम् । विश्वेषां बं कामितं जुहोति ददाति च । ब कामने । हु दानादनयोः । विशो रक्षार्थं वातीति विश्वं राजन्यकुलमस्य बाहुतः ॥

३१८. **महीधरः–** महीं दधार । महतीं च पूजाम् । महतीं च रमाम् । भूरूपां वा । येन च मही धरा बभूव । महीधा ये महीं दधते सङ्कर्षणादयः । तानयं रमयति राययति च । अधिकमुपरि (३७०) ॥ ४७ ॥

**अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।**
**अपान्निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ४८ ॥**

३१९. **अच्युतः–** द्वितीयं रूपम् । १००तमं प्रथमम् । ५५६तमं तृतीयमच्युताख्यम् । स्वे महिम्नि स्थितस्तस्मान्न च्यवत इत्यच्युतः । न च्यवन्ते चानेन । अश्च दोषैश्च्युतश्च ॥

३२०. **प्रथितः–**सर्वागमेषु सृष्ट्याद्यष्टकर्तृत्वेन प्रथितः । प्रकृष्टेष्वपि स्थितः । ज्ञानिलोके प्रथितः । नानावतारैः प्रथितः । प्रथावन्तः प्रथिनः । तेषु ततः । प्रकृष्टं थमन्नं ज्ञानाख्यम् । तद्वत्सु प्रथिषु ततः । प्रधौ चक्रान्ते गतः । धस्य थः ॥

३२१. **प्राणः–** द्वितीयं रूपम् । ६६तममाद्यम् । ४०८तमं तृतीयम् । प्रकृष्टतया जगन्नयनात् प्राणः । प्राणे स्थितश्च । प्रकृष्टः आणः पूर्णानन्दः पूर्णबलश्च ॥



३२२. **प्राणदः–** द्वितीयं रूपम् । ६५तमं प्रथमम् । ४०९तमं तृतीयम् । ९५६तमं तुरीयम् । प्राणिनां प्राणनं ददातीति प्राणदः । प्राणः पूर्णः दाता च । प्रा पूरणे । मुक्तानां प्राणं पूर्णमानन्दं ज्ञानं च ददाति । असतां प्राणान् द्यतीति च ॥

३२३. **वासवानुजः–** वासवानुजतया अदित्यां जातो वामनः । वासवो यदनुग्रहेण स्वःपतिः जायते । जीवावासेषु शरीरेषु वर्तत इति वासवः । सर्वत्र वासवान् वासवः । 'वासवत्त्वात्तु वासवः' इति हि स्मरन्ति । जीवजननमनु स्वयमपि जायते व्यज्यत इति अनुजः । सर्वजगन्निवासः, वं वायुं स्वानुगं जनयतीति वानुजः । अथ च वं ज्ञानमनु जायते व्यज्यते इति वानुजः ॥

३२४. **अपान्निधिः–**अपां निधिः समुद्रान्तर्गतः । अपां कर्मणां निधिरयम् । अपां पालकान्तररहितां रमां वक्षसि निदधाति । अकारवाच्येन स्वेन पालितां वा । अथचैतादृशीमपां श्रुतिततिं निदधाति । अथच अपां देवतानां निधिराश्रयः ॥

३२५. **अधिष्ठानम्–** सर्वजगदधिष्ठानम् । अधिकं च स्थानम् । भक्तानामधिकं च मोक्षाख्यं स्थानमनेन । ज्ञानिहृदयाख्यमधिकं स्थानं यस्य । सर्वस्मादधिकश्चायं स्थानं च सर्वस्य ॥

३२६. **अप्रमत्तः–**न कदाऽपि प्रमाद्यति । अश्च प्र च मत्त आनन्दपूर्णश्च । मदी हर्षे । अप्रः अधिकपूर्णः, मदि हर्षे ततश्च ॥

३२७. **प्रतिष्ठितः–** स्वे महिम्नि प्रतिष्ठितः । जीवहृदये प्रतिष्ठितः । सर्वत्र प्रतिष्ठितः । ज्ञानिनां हृदि प्रतिष्ठितः । जीवं प्रतिप्रति बिम्बरूपतया स्थितः । प्रतिमासु स्थितः । प्रतीपेष्वपि स्थितः ॥ ४८ ॥

**स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।**
**वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ४९ ॥**

३२८. **स्कन्दः–** स्कन्दान्तर्यामी । जगतः स्कन्दनात् संहरणाच्च स्कन्दः । स्कदिर् गतिशोषणयोः । प्रळये जलं स्कन्दयतीति स्कन्दः । रेतसि स्थितः स्कन्नो भवति । स्वकर्मणः स्कन्नं स्खलितं द्यति ॥

३२९. **स्कन्दधरः–**जगतः स्कन्दनहेतून् शिवादीनपि धत्ते इति स्कन्दधरः । स्कन्दं धरति । स्कन्दं दधत् स्कन्दधः शिवः । तं रमयति । संसार-शोषको भगवानेव स्कन्दः । तं ये हृदये दधति तानयं रमयति । रेतोगतः स्कन्त्वास्कन्त्वा स्त्रीणां गर्भं ददाति धारयति च । स्कन्द-श्चायम्, धरश्चायम् ॥

३३०. **धुर्य्यः–** जगद्रक्षणधुरं वहतीति धुर्यः । धुरि याति च । धुरं यमयति च, यापयति च ॥

३३१. **वरदः–** सतां वरं ददाति, असतां च वरं द्यतीति वरदः । वं च रं च ज्ञानानन्दौ ददाति । क्वचिद् द्यति । वरेभ्योऽपि ददाति । वरदेशवरप्रदः । वराहनृसिंहादिरूपेषु वररदः ॥

३३२. **वायुवाहनः–** वायून् वाहयति, वायुश्चास्य वाहनमिति वायुवाहनः । वायुना च देहं वाहयति । वयते सर्वं बध्नातीति वायुः । सर्वनिर्वाह-कश्च । वाहानपि तत्र गतो नयति । भगवन्तं वहन्नयत इति वायुर्गरुडः वाहनमस्य । वायुगतो वायुनामा । वाहनगतो वाहननामा । अधिक-मुपरि (८६०) ॥

३३३. **वासुदेवः–** वस्ते आच्छादयत्यात्मानमिति, वसति सर्वत्रेति वासुः । ज्ञानिनां पुनर्देवयति प्रकाशयत्यात्मानमिति वासुदेवः । सत्त्वमयं मनो वसुदेवम् । तत्र व्यज्यत इति वासुदेवः । वसुदेवसुतश्चायमेव रूपान्त-रेण । अधिकमुपरि (६९९;७१३) ॥

३३४. **बृहद्भानुः–** बृहन्तो भानवोऽस्येति बृहद्भानुः । बृहन्नयं भाति च नुदति च । बृहन्तोऽपि भासकास्तमेवानु भान्ति ॥



३३५. **आदिदेवः–** सर्वस्यादिरयं कारणं देवः । देवानामप्यादिः । आदत्ते च दीव्यति च । अधिकं तूपरि (४९२) ॥

३३६. **पुरन्दरः–** पुरन्दरगतः पुरन्दरः । शत्रुपुरं दारयन् पुरन्दरः । चरमशरीरस्य ब्रह्मनाडीं दारयन् पुरन्दरः । पुरं दत्वा रमयति च ॥ ४९ ॥

**अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।**
**अनुकूलः शतावर्त्तः पद्मी पद्मनिभेक्षणः ॥ ५० ॥**

३३७. **अशोकः–** शोकवर्जितः । अन्येऽप्यनेन भवन्ति शोकवर्जिताः । स्वय-मुत्कृष्टं कमश्नातीत्यशोकः । सर्वाशनादधिकसुखत्वाच्च अशः । ओः शम्भोरपि कमनेनेत्युकः । अशश्च उकश्च । अशोके वृक्षे गतश्च ॥

३३८. **तारणः–** तारयति संसारात् इति तारणः । तारकानपि नयति । तारेण हृदि नीयते । कपीन् उदधेस्तारयति रामात्मना । तत्र तारं कपिं नयति । स्वयं ततः, जीवेष्वरं दोषं नयत्यपनयति च ॥

३३९. **तारः–** तारवाच्यत्वात् तारः । तारयति दुःखेभ्यः । सर्वत्र तत आरमते च । ज्ञानेन ततास्ताः । तेषामारमणं यस्मात् । भूमौ तता ज्यायांसोऽसुराः । तेषामरमणं यस्मात् । तरन्ति संसारशरधिमिति ताराः मुक्ताः । तेषामयं स्वामी । अधिकमुपरि (९६८) ।

३४०. **शूरः–** दुर्जनभयङ्करः शूरः । शून् सुखशीलान् सत ऊरीकरोति । शुं शंरूपं वायुं वोरीकरोति । उच्चै रमयति । शुं शतानन्दं उं रुद्रं च रमयति वा ॥

३४१. **शौरिः–** शूराणामन्तर्यामी शौरिः । शिः पूर्णानन्दः । शौ पूर्णानन्दे स्वे महिम्नि रितः स्थितः । रि गतौ । अधिकमुपरि (६४८) ॥

३४२. **जनेश्वरः–** ये पुनर्न जायन्ते मुक्तास्तेषामप्ययमीश्वरः । किंपुनरन्येषां जनानाम् । न जायत इति जन ईश्वरश्च । जनकश्चेश्वरश्च । जगज्जनका-नामपीश्वरः ॥

३४३. **अनुकूलः–** सतामनुकूलः। नदीजलं कूलमनुसृत्य वाहयति। सर्वत्रानुगतः सर्वं कूलत्याच्छादयति । कूल आवरणे ॥

३४४. **शतावर्त्तः–** शतधा आवर्तयति संसारावर्त इति शतावर्तः। शतं रूपाणि चावतारैरावर्तयन् अनन्तरूपः । शं तनोति । संसार आवर्तयति च ॥

३४५. **पद्मी–** पद्मं हस्तेऽस्येति पद्मी । पद्मश्चतुर्मुखोऽस्य विद्यते सुतत्वेनेति । लोकसारं पद्ममस्य नाभाविति । त्रिभिः पदैर्मिमीते विश्वम् । सर्वैरपि पदैर्मीयते ॥

३४६. **पद्मनिभेक्षणः–** पद्मपत्रनिभे अस्येक्षणे इति । पद्मनिभं चतुर्मुखसमानं वायुं प्रेम्णेक्षते । पद्मं लोकपद्मं चतुर्मुखं वा नयतीति पद्मनिः, भान्ति ईक्षणान्यस्य ॥ ५० ॥

**पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।**
**महर्द्धिरृद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ५१ ॥**

३४७. **पद्मनाभः–** तृतीयं रूपम् । १९६तमं द्वितीयम् । अष्टचत्वारिंशमाद्यम् । पदैर्मीयत इति पद्मः । अस्य पुरतः सूर्यादयो नाऽभान्तीति नाभः । जगत्पद्मं नयति । आभाति च सर्वत्र । पद्मनेता पद्मनः सूर्यः । सोऽप्याभाति अनेन ॥

३४८. **अरविन्दाक्षः–** अरविन्दनिभे अस्याक्षिणी इत्यरविन्दाक्षः । अकारवाच्यः । रविं ददातीति रविन्दमक्षि चास्येत्यरविन्दाक्षः । 'चक्षोः सूर्यो अजायत' इति हि श्रुतिः ॥

३४९. **पद्मगर्भः–** विश्वात्मकं पद्मं पद्मो वा चतुर्मुखोऽस्य गर्भ इति पद्मगर्भः । हृत्पद्ममस्य गर्भोऽभिव्यक्तिस्थानमिति च ॥

३५०. **शरीरभृत्–** शरीराणि अयं बिभर्ति । अत एव ब्रह्मणा त्यक्तदेहो मृत इत्युच्यते । शरीरस्थानीयं जीवं च बिभर्ति । 'यस्याऽत्मा शरीरम्'



इति श्रुतिः । पृथिव्यादिकं च बिभर्ति । 'यस्य पृथिवी शरीरम् । यस्याऽपः शरीरम्' इत्यादेः । भक्तानुकम्पया नानाशरीराणि बिभ्रदवतरति । 'शरो ह्यात्मा', तस्मिन् ईरं बिभर्ति । तमीरयन् वा बिभर्ति । तस्य ईं सम्पदं रतिं च बिभर्ति ॥

३५१. **महर्द्धिः–** महती किलास्य समृद्धिरिति महर्द्धिः । महानयमृतनिधिः ॥

३५२. **ऋद्धः–** द्वितीयं रूपम् । **२७९**तमं प्रथमम् । अत एवायं सर्वेभ्यः समृद्ध इत्यृद्धः । ज्ञानरूपत्वाद्दकारः । ददद् दधद् वा दकारः । धारणाद् धकारः । ऋतान् मुक्तान् धारयतीत्यृद्धः । ऋतैर्वेदैर्ध्रियत इत्यृद्धः । ऋतं यथार्थज्ञानरूपत्वाद्, धारकश्च सर्वस्य । निर्विकारत्वाद्दतः । दधातीति धः । ऋतं धयति पिबतीति ऋतन्धय एव ऋद्धः । धेट् पाने ॥

३५३. **वृद्धात्मा–**अत एव वृद्धः परिपूर्ण आत्मा स्वरूपमस्येति वृद्धात्मा । आत्मानश्च जीवा अनेनाऽराधितेन यथायोग्यं ज्ञानभक्त्यादिभिर्वृद्धाः परिपूर्णा भवन्ति । तेषामयं स्वामीति च । उपासनायै वृतं भगवद्रूपं हृदि ये दधति ते वृद्धाः । तेषामयं स्वामी ॥

३५४. **महाक्षः–** गुणतः कालतः देशतः सङ्ख्यया च महान्ति अनन्तानि अक्षीणि अक्षाणि वाऽस्येति महाक्षः । महानयमक्षयश्च । महमुत्सवमक्ष्णोति चायम् ॥

३५५. **गरुडध्वजः–** गरुडोऽस्य ध्वजे स्थित इति गरुडध्वजः । गरुडे स्थितो ध्वजति गच्छति च । पक्षिषु गतः गरुद्भ्यां डयत इति गरुडः । ध्वजे स्थितो ध्वजः । ध्वाजयति तस्यतस्य तत्तद् गमयतीति ध्वजः । ध्वज गतौ । छन्दोमयेन गरुडेन ध्वज्यते व्यज्यते ॥ ५१ ॥

**अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।**
**सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥ ५२ ॥**

३५६. **अतुलः–** नास्य तुला विद्यत इत्यनुपमोऽतुलः । न विद्यते तुला मानकमस्येति च । न तुदति लाति च ॥

३५७. **शरभः–** शरैः भाति शार्ङ्गधन्वाऽयमिति शरभः। शरेषु शरीरेषु भाति। शराणां जीवानां लक्षतया भाति च। 'शरो ह्यात्मा ब्रह्म तल्लक्ष्मुच्यते'। शरभे च सन्निहितः। शं च रं च भाति च॥

३५८. **भीमः (अभीमः)–** अग्न्यादयोऽप्यस्माद् बिभ्यति। 'भयादस्याग्निस्तपति' इत्यादेः। तेन भीमः। शत्रुभयङ्करत्वाच्च। धर्मभीरून् मानयति। अभीमो वा सताम्। अधिकमुपरि (९४८)॥

३५९. **समयज्ञः–** सर्वं तत्तत्समये करोतीति समयज्ञः। अयमेव समयान् भारतादिशास्त्राणि जानाति। अन्ततः स्वार्पणेन सर्वेऽपि यज्ञाः समा अस्येति समयज्ञः। सर्वभूतेषु समत्वात् समः। मया लक्ष्म्या सहितत्वाच्च। इज्यत इति यज्ञः। यदस्ति तज्जानातीति च। सम्यक् सर्वत्रायत इति समयः सर्वगतः। सर्वं जानातीति ज्ञः। सम्यगयज्ञः। मया रमया सहितः समो यज्ञनारायणाख्यः। सारात् सः। मानान्मः। यानाद् यः। ज्ञानाज्ज्ञः। ज्ञपनाद्वा॥

३६०. **हविर्हरिः–** हविर्भागं हरन् हविर्हरिः। हूयत इति हविः। हरणाद्धरिरिति च। वर्णतः हरिरिति च॥

३६१. **सर्वलक्षणलक्षण्यः–** सर्वैरपि सल्लक्षणैर्लक्षणीयः। शास्त्राणि वा लक्षणानि। सर्वशास्त्रज्ञेयः। सर्वश्च लक्षणलक्षण्यश्च॥

३६२. **लक्ष्मीवान्–** वक्षसि लक्षणभूता लक्ष्मीरस्येति लक्ष्मीवान्। सर्वसम्पद्वान्। सर्वाधिकशोभावान्। 'लक्ष्मीः सम्पत्तिशोभयोः'॥

३६३. **समितिञ्जयः–** शत्रूणां समितिं युद्धं जयतीति समतिञ्जयः। ज्ञानिषु गतोऽयमेव विद्वत्समितिं जयति। समितिं साम्परायं जयन्त्यनेन॥ ५२॥

**विक्षरो रोहितो मार्ग्गो हेतुर्दामोदरः सहः।**
**महीधरो महाभागो वेगवानमिताशनः ॥ ५३॥**



३६४. **विक्षरः–** विगतक्षरणो विक्षरः। क्षर विनाशे। विशेषतः क्षरणाच्च विक्षरः। क्षर सन्ततदाने। विगतक्षयेषु मुक्तेषु रमते। विक्षेषु विशिष्टस्थानेषु पुण्यक्षेत्रेषु पुण्यपुरुषेषु विशेषतः सन्निधाय रमते। क्षि निवासे। विश्चायं क्षश्चायं रश्चायम्॥

३६५. **रोहितः–** ध्याने प्रोद्यदादित्यवर्णः प्रतिभातीति वर्णतो रोहितः। अयमेव हि रोहितो मत्स्यो बभूव। अयमेव सतां पुरोहितः। असतां तिरोहितः। ज्ञानिभिश्चिरोहितः। रोमसु निहितः। प्राणिनामुरसि निहितः। रोगिणामौषधरूपेण हितः। आरोपरहितः। रोषरहितः। अथापि दुष्टेषु रोषसहितः। रोषोऽपि हितोऽस्य। ऊर्ध्वं रोहतां हितः। सर्वमिदं 'महिळामदासः महिदासः' इतिवत्। रोहिषु ततः। वेदवचनै रुवन्तीति रावः। तेषामयं हितः॥

३६६. **मार्ग्गः–** सर्वैर्मृग्यत इति मार्गः। मार्गश्चायं मोक्षस्य। 'एष पंथाः' इति श्रुतेः। मारं गच्छतीति मारगश्च मार्गः। मारयति गमयति च। अधिकमुपरि (३९८)॥

३६७. **हेतुः–** कारणानामपि कारणम्। संसारहेतुः, मोक्षहेतुः। सृष्ट्याद्यष्टकस्य हेतुः। सर्वहेतुः। हानाद्धः। इच्छारूपत्वादिः। तुदतीति तुः॥

३६८. **दामोदरः–** दामानि भूरादयो लोका यस्य उदरे स दामोदरः। यशोदया च दाम्नोदरे बद्धः। दमवन्तो दामाः। तैरुदरे ध्येय इति दामोदरः। शत्रुदमनाद् दामः। उद्गतदोषत्वादुदरश्च॥

३६९. **सहः–** सर्वान् सहतेऽभिभवति। भक्तानामपराधं सहते मर्षयति॥

३७०. **महीधरः–** द्वितीयं रूपम्। ३१८तमं प्रथमम्। हिमालयादिषु महीधरेषु सन्निहितः महीधरः। महीं धरन्नपि महीधरः। महीति भूमिः। महीति महती प्रकृतिः। मह्यां गतो मही। धरेषु गतो धरः॥

३७१. **महाभागः–** महान् भागो भाग्यमस्येति महाभागो भगवान्। महनीयः, अखण्डत्वादभागश्च। महती भा यस्यासौ महाभः। अगः

अचलश्च। मश्च हश्च आभातीति आभश्च अश्च भश्च वा, भक्तहृदया-न्नापगच्छतीत्यगश्च। महान्तो भागा इव भागा अवतारा अस्य। महाभा रमा तत्र गतः। महाभः सूर्यः। तत्र आ समन्ताद् गतः। महाभेषु सर्वेषु च गतः। महाभायां विद्युति गतः। महाभायां श्रुतौ गतः। महाभारतगतः॥

३७२. **वेगवान्–** यतोऽयं 'आसीनो दूरं व्रजति शयानो याति सर्वतः'। वं ज्ञानं बलं वा। इरितीच्छा। गं सर्वत्र गतिः। तद्वान्। वेगेन भक्तोद्धरणाय वान् गच्छन् वेगवान्। वेगेन वाति वेगवो गरुडः। तत्रानिति। वेदगो वातीति वेगवान्। वेद्यो भगवानयम्॥

३७३. **अमिताशनः–** प्रळये सर्वमश्नातीत्यमिताशनः। अमितः स्वयं सर्वमश्नाति च। अमिताशान् नयति च। अमितमशं दुःखं नयति पापिनाम्॥ ५३॥

**उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः।**
**करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः ॥ ५४॥**

३७४. **उद्भवः–** जगतामुद्भवः। भवादुद्गतः। अनेन च भवन्ति भवादुद्गताः। उत्कृष्टा वा भवा अवताररूपा अस्येति उद्भवः। सदा चोत्कृष्टो भवति सर्वस्मात्। उत्कृष्टश्चायं भवश्च। भश्च वश्च। अधिकमुपरि (७९४)॥

३७५. **क्षोभणः–** सृष्ट्यर्थं प्रकृतिपुरुषयोः क्षोभणात् क्षोभणः। शत्रुक्षोभणाच्च। क्षश्च क्षरमक्षरं चेत्युभौ पुरुषौ नयतीति च क्षोभणः। उपरि भातीत्युभः। णश्च आनन्दरूपश्च। दुर्जनेषु क्षोभं नयति च॥

३७६. **देवः–**सृष्ट्यादिरस्य क्रीडेति देवः। भक्तैः सह क्रीडतीति च देवः। क्रीडयतीति देवः। दिवु क्रीडायाम्। सर्वान् जयति, सर्वत उत्कृष्टो भवतीति च देवः। दैत्यान् जयतीति देवः। देवा जयन्त्यनेनेति देवः। 'ब्रह्म ह देवेभ्यो विजिग्ये' इति श्रुतेः। भक्त्या जीयत इति



देवः। दिवु विजये। सर्वव्यवहारनिर्वहणाच्च देवः। दिवु व्यवहारे। स्वयं द्योतते सूर्यादीन् द्योतयतीति च देवः। भक्तानामात्मानं द्योतयति च। दिवु द्युतौ। सर्वैः पदैः सर्वैः स्तूयत इति च देवः। दिवु स्तुतौ। सत्येच्छत्वाद् देवः। ज्ञानिन एनमेवेच्छन्तीति देवः। दिवु कान्तौ। कान्तिरिच्छा। सर्वज्ञत्वात् सर्वगतत्वाच्च देवः। ज्ञानिभिर्ज्ञेयवाद् गम्यत्वाच्च देवः। दिवु गतावगतौ च। दातृत्वाद् दे च, अवनादवश्चेति देवः। दे च वश्च वा॥

३७७. **श्रीगर्भः–** श्रीः जगद्रूपा वेदरूपा वा यस्य गर्भे स श्रीगर्भः। सर्वैः श्रयणाच्छ्रीः। ज्ञानरतिभारूपत्वाद् गर्भः॥

३७८. **परमेश्वरः–** ईश्वराणामपीश्वरः परमेश्वरः। सर्वपरमः सर्वेश्वरश्च। पातीति पश्च रमेश्वरश्च। परश्च माया ईश्वरश्च। सर्वजीवपरमे ब्रह्मणि वायौ वा श्वयति रमते च। श्वयन् रमयति वा॥

३७९. **करणम्–** जगतः असाधारणं कारणमिति करणम्। कुर्वन्तीति करा जीवाः। तेषां णः बलं निर्वृतिश्चानेन। तान् नयति च। करे स्थित्वा कर्म प्रणयति च। आनन्दरूपो रणोऽस्येति च करणम्। आनन्दरूपं च। रण्यत इति रणं सर्वपदगदितं ब्रह्म॥

३८०. **कारणम्–** साधारणं कारणमप्ययमेवेति कारणम्। कारयन्तीति काराः देवाः। तेषां बलं सुखं चानेन। तान् नयति चेदं ब्रह्म। सुखरूपत्वात् कं च, अरणं शरणं च। अराणां दोषाणां नयनाच्च अरणम्॥

३८१. **कर्त्ता–** द्वितीयं रूपम्। ३१६तमं प्रथमम्। स्वतन्त्रः सर्वकर्ता चायम्। कर्मणस्तारयति॥

३८२. **विकर्त्ता–** विविधजगत्कर्ता। नास्य कश्चित् कर्तेति विगतकर्ता च विकर्ता। अन्ते विकर्तनाच्च। वयः पक्षिणो ज्ञानिनो वा। तानपि करोति संहरति चायम्। आत्मानं च विविधं करोति। अवतारेषु विचित्राणि कर्माणि करोति। दैत्येषु विरोधं करोति। पदार्थान्

विभिन्नान् विभिन्नधर्मांश्च करोति । विधिकर्ता । शास्त्रविधिकर्ता । विहितकर्ता । वेः गरुडस्य कर्ता । प्रकृतिं विकरोति च ॥

३८३. **गहनः–** अथापि न ज्ञायत इति गहनः । 'न तं विदाथ य इमा जजान' इति श्रुतेः । गहने वने गतः । गतिं हतिं च प्रणयति । गश्चायं हश्चायं नश्चायम् । अधिकमुपरि (५४७) ॥

३८४. **गुहः–** स्वात्मानं गूहत इति गूढत्वात् गुहः । गुहे स्थितश्च गुहः । गुणिभिर्ह्रियते ज्ञायत इति च गुहः । ओ हाङ् गतौ ॥ ५४ ॥

**व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।**
**परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ५५ ॥**

३८५. **व्यवसायः–** निश्चयज्ञानरूपत्वाद् व्यवसायः । विविधं जगदत्र अवसीयत इति च व्यवसायः ॥

३८६. **व्यवस्थानः–**विविधं जगदवस्थानमस्य । विविधान्यवस्थानान्यनेन । विविधरूपः सन्नवतिष्ठते पिण्डाण्डे च ब्रह्माण्डे च । विविधं व्यवस्थापयति चेति व्यवस्थानः ॥

३८७. **संस्थानः–**नित्यं वैकुण्ठरूपं समीचीनं स्थानमस्य, अन्यांश्च तत्तद्योग्यस्थानेषु सम्यक् स्थापयतीति संस्थानः । सन्तिष्ठते च ज्ञानिहृदये ॥

३८८. **स्थानदः–**सर्वेषां योग्यस्थानदः । जगतः स्थितिप्रदः । स्थावराणामपि अनदश्चेष्टाप्रदः ॥

३८९. **ध्रुवः–** स्वयं निर्विकारत्वाद् ध्रुवः । ध्रुवेषु ध्रुवे च गतः ॥

३९०. **परर्द्धिः–**परा समृद्धिरस्येति परर्द्धिः । परेषामपि समृद्धिरनेन ॥

३९१. **परमस्पष्टः–** सर्वस्मात् परमः । परा मा कान्तिः ज्ञानं वाऽस्येति परमः । परम इति योगिनां हृदये स्पष्ट इति परमस्पष्टः ॥



३९२. **तुष्टः–**नित्यसन्तुष्टः । भक्त्योपहृतेन पत्रेण फलेन जलेन वा तुष्टः । ज्ञानिकृतेनाल्पेनापि धर्मेण तुष्टः । तुष्टेषु गतश्च । तुष्टश्च टङ्की च ॥

३९३. **पुष्टः–** सर्वैर्गुणैः पुष्टः । अन्ये च पुष्यन्त्यनेन ॥

३९४. **शुभेक्षणः–**मङ्गलकरं मोक्षादिपुरुषार्थदमीक्षणमस्येति शुभेक्षणः । शुभानां शुभमात्मानमीक्षयति । सुखिषु भाति । ईक्षणीयत्वादीक्षणः । शुभैरीक्षणीयः । शुभरूपः । याः लक्ष्म्याः क्षण उत्सवोऽनेनेति ईक्षणः । शुभानामीः सम्पत् क्षणश्चायम् ॥ ५५ ॥

**रामो विरामो विरजो मार्ग्गो नेयो नयोऽनयः ।**
**वीरः शक्तिमतां श्रेष्ठो धर्म्मो धर्म्मविदुत्तमः ॥ ५६ ॥**

३९५. **रामः–** रमन्ते योगिनोऽस्मिन्निति रामः । श्यामलवर्णत्वाद् रामः । रं रमणं अमं अमितमस्येति च रामः । रामाया रमाया वा अयं रामः । रश्च अश्च मश्च रामः ॥

३९६. **विरामः–** जगतो विरामः । विविधं रमते । विः पक्षी गरुडः, तस्मिन् रमते चेति विरामः ॥

३९७. **विरजः–** विगतरजाः । विरतो वा विषयभोगाद् विरक्तः । ये विरताः संसारात्, ये च विशेषतो भगवति रताः, तेष्वयं जायते । 'विरतः' इति केचित् ॥

३९८. **मार्ग्गः–** मार्ग इति पुना रूपान्तरम् । ३६६तमं प्रथमम् । रामावतारे मार्गयति सीतां वनेवने । माभिः प्रमाभिः ऋतश्चाधिगतश्च । मार्गेषु गतश्च ॥

३९९. **नेयः–** ज्ञानिभिर्हृदि नीयत इति नेयः । न सामस्त्येन केनापीयते । नेतिनेतीयते ॥

४००. **नयः–** सर्वं जगन्नयतीति नयः । तदेवं मार्गोऽयं, नेयोऽयं, नेता चा-यम् । अथ न यातीति नयः । ज्ञानिनस्तमो न यापयति; तामसांश्च मोक्षम् । नयगतश्च । नम्यत्वान्नः । यजनीयत्वाद्यः ॥

**॥ इति नाम्नां चतुर्थं शतकम् ॥**

४०१. **अनयः–** नास्य नेताऽन्यो विद्यत इत्यनयः । तामसान् मोक्षं न नयतीति चानयः । अनं प्राणं यमयतीति च । न विद्यतेऽन्यः अयः शुभावहोऽस्येत्यनयः । न अयन्ते जानन्ति एनमज्ञानिन इति । अश्च नश्च यश्च अनयः । अश्च नयश्च । अनश्च यश्च ॥

४०२. **वीरः–** वीर शूर पराक्रान्तौ । परान् दुष्टानाक्रमते सज्जनोद्दिधीर्षयेति वीरः । विशिष्टानीरयति । विं गरुडमीरयति । विशिष्टश्च ईरः समीरोऽनेन । विश्वायमीरः सर्वप्रेरकश्च । 'विः पक्षिपरमात्मनोः' । विविधमीरयति च । विचित्रमीरयति च । अधिकमुपरि (६४७;६६२) ॥

४०३. **शक्तिमतांश्रेष्ठः–** यतो वीरः पराक्रमते अतः शक्तिमतामयं श्रेष्ठः । नामत्वादलुक् । शक्तिरिति या शाक्तैर्मता लक्ष्मीः तां प्रत्ययं श्रेष्ठः । शक्तिरूपश्च । ज्ञानिभिर्मतश्च । अन्तकत्वादं च । सर्वश्रेष्ठश्च ॥

४०४. **धर्मः–** जगतां धारकत्वाद् धर्मः । धर्मदेवतायां सन्निहितत्वाच्च । ये धरन्ति तानप्ययं निर्माति च संहरति च । धरैरपि मितः । धरेष्वपि मितः । धरायामपि मितः ॥

४०५. **धर्मविदुत्तमः–** धर्मस्य पथः, धर्मं भगवन्तमेव वा ये जानन्ति तेष्वयं सर्वोत्तमः । धर्मविच्चोत्तमश्च धर्मश्च विदामुत्तमश्च ॥ ५६ ॥

**वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।**
**हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ५७ ॥**

४०६. **वैकुण्ठः–** वैकुण्ठस्यायं पतिरिति वैकुण्ठः । कर्मसु कुण्ठा प्रति-हतिः । विकुण्ठाः अप्रतिहतगतयः । तेषामयं स्वामी । विशेषतः



कुण्ठितानां तामसानामप्ययं कुण्ठितताप्रदः । विगतकुण्ठनाद् विकुण्ठ एव वा वैकुण्ठः ॥

४०७. **पुरुषः–** द्वितीयं रूपम् । चतुर्दशमाद्यम् । पुरु सरणात् पुरुषः । पुरे भवन् पापानि औषद् ददाहेति पुरुषः । पूर्णत्वात् पूरणाच्च पालनाच्च पुरुषः, पिपर्तीति । पॄ पालनपूरणयोः । सर्वं पुनानः, रुतश्च सर्वैः, स्यति च सर्वमन्ते ॥

४०८. **प्राणः–**तृतीयं रूपम् । ३२१तमं द्वितीयम् । ६६तमं प्रथमम् । प्राणे स्थितः प्राणनामा । प्रकृष्टकर्मा, प्राणः । अन चेष्टायाम् । प्रकृष्टगतिः, प्रकृष्टज्ञानः, प्रकृष्टानन्दः । आणेति सरस्वती पठ्यते । सा स्त्रीजीवेषु प्रकृष्टा येन ॥

४०९. **प्राणदः–** तृतीयं रूपम् । ३२२तमं द्वितीयम् । ६५तमं प्रथमम् । ९५६तमं तुरीयम् । प्रकृष्टं आ+अनं चेष्टां, आ+णं आनन्दं वा ददातीति । दुष्टानां प्रकृष्टमानन्दं द्यति, चेष्टां च द्यति । प्राणानां पूर्णसाधनानां ददाति मोक्षम् ॥

४१०. **प्रणवः–** प्रणुवन्ति वेदाः सर्वे च शब्दा एनमिति प्रणवः । प्रकृष्टश्च नवश्च नित्यनूतनश्च । प्रकृष्टं णं बलमानन्दं वा वाति वाययति वा प्रणवः । वा गतौ । प्रकृष्टो ण आनन्दः प्रकृष्टं च वं ज्ञानमस्य । सर्वेऽप्येनं प्रणुवन्ति । प्रणवप्रतिपाद्यश्चायम् । प्र च णश्च वरत्वाद् वश्च । अधिकमुपरि (९५७) । प्रणम इति नाम केचिदत्र पठन्ति ॥

४११. **पृथुः–** सर्वशास्त्रेषु प्रथितत्वात्, सर्वगतत्वाच्च प्रथत इति पृथुः । पृथुचक्रवर्तिगतश्च तन्नामा राजराजेश्वरः ॥

४१२. **हिरण्यगर्भः–** द्वितीयं रूपम् । ७०तमं प्रथमम् । हितै रमणीयैश्च गुणगणैर्गर्भितः । हिरण्यश्च सर्वस्य धारणात् गर्भश्च । हिरण्य-गतत्वाद्धिरण्यम्, गर्भगतत्वाद् गर्भः ॥

४१३. **शत्रुघ्नः–** शत्रुघ्नान्तर्यामी शत्रुघ्ननामा । देवशत्रून् हन्ति चायम् । यैः शं त्रुट्यते तांश्चायं हन्ति ॥

४१४. **व्याप्तः–** सर्वत्र व्याप्तः । कालतश्च, गुणतश्च, शक्तितश्च । विशेषेणाऽऽप्तः, आप्ततमः । विना गरुडेनाऽऽप्तः । विशिष्टैर्ज्ञानिभिराप्तः । दुष्टैराप्तो न भवतीति च व्याप्तः । विश्वायमाप्तश्च ॥

४१५. **वायुः–** वातीति वायुः । वाति आयुश्च वा । वयते जगत् सम्बध्नातीति वायुः । वं ज्ञानं बलं वाऽयते । वं वायुमयते । वाय्वन्तर्यामी वायुनामा । सर्वोत्तमत्वाच्च वायुः । वय श्रेष्ठत्वे ॥

४१६. **अधोक्षजः–** जातु कदाचिदपि अधो न क्षीयते, इत्यधोक्षजः । अधः कृतमक्षजं येन सोऽधोक्षजः । अधःकृताक्षेषु जायते अभिव्यक्तो भवतीति च । अधः कृतेषु सत्स्वक्षेषु जायते वा ॥ ५७ ॥

**ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।**
**उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ५८ ॥**

४१७. **ऋतुः–** ऋतुमानिषु गतः । ज्ञानरूपत्वादियर्तीति ऋतुः । अर्यत इति चर्तुः । ऋतं तनोति चायम् ॥

४१८. **सुदर्शनः–** सुदर्शनं करेऽस्य । सुखकरं दर्शनमस्य । सुन्दरे दर्शने अक्षिणी अस्य । सुदर्शनीयानयं नयति । सुखकराणि दर्शनानि शास्त्राण्यनेन ॥

४१९. **कालः–** सर्वं कलयतीति कालः । 'कालः कलितसम्पूर्णसद्गुत्वाज्जनार्दनः' इति स्मरन्ति । शत्रून् कालयतीति च । सर्वान् गुणान् कलयतीति च । कालान्तर्यामी च कालनामा ॥

४२०. **परमेष्ठी–** परमेष्ठिगतः परमेष्ठिनामा । परमे स्वे महिम्नि स्थितः । परमे वायौ परमे वा हृदयाकाशे तिष्ठन् परमेष्ठी ॥



४२१. **परिग्रहः–** परितो भक्तैर्दत्तं पत्रं पुष्पं फलं तोयं गृह्णातीति । परितो भक्तान् गृह्णाति । भक्तैश्च गृह्यते ॥

४२२. **उग्रः–**धर्मात्यये भयङ्कर इत्युग्रः । उच्चैः ग्रसति । उच्चानपि ग्रसति । उं शम्भुमपि ग्रसति । उश्च ग्रहणाद् गरणाद्वा ग्रश्च ॥

४२३. **संवत्सरः–** द्वितीयं रूपम् । ९१तमं प्रथमम् । सम्पूर्णत्वात् सम् । वत्सानां रमणश्च । सम्पूर्णोऽपि लीलया वत्सः सन् देवक्यादीन् रमयति । वत्सान् चारयन् वृन्दावने तैः सह रमते । तांश्च रमयति । सम्पूर्णः वत्सरगतश्च । संवत् वर्षाणि सारयति ॥

४२४. **दक्षः–** सर्वकार्येषु दक्षत इति दक्षः । ददाति क्षपयति च । द्यति क्षमते च । अधिकमुपरि (९१८) ॥

४२५. **विश्रामः–** दुःखजलधिमग्नानां विश्रामस्थानम् । तामसान् तमसि विविधं श्रामयति । सात्विकांश्च विगतश्रमान् करोति । विश्राः विगतपाका अपक्वाः । श्रा पाके । तेषाममा अज्ञानम्, तथा विशेषतः पक्वनामा समन्तात् मा ज्ञानं चानेन ॥

४२६. **विश्वदक्षिणः–** विश्वस्मात् सर्वस्मादपि दक्षिणो दक्षः । सर्वत्र च दक्षः । भक्ताय सर्वमपि दक्षिणात्वेन ददाति, स्वात्मानमपि । विश्वश्च दक्षिणश्च ॥ ५८ ॥

**विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ।**
**अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ५९ ॥**

४२७. **विस्तारः–** विस्तारयति जगदिति विस्तारः । गुणविस्तारोऽयम् । सर्वगतत्वाच्च विस्तारः । शास्त्राणि विस्तारयन्त्यस्य गुणान् । विं विष्णुं सरन्तीति विसा ज्ञानिनः । तान् तारयति । लोके शास्त्रे च विस्तृतश्चायं तारकश्च ॥

४२८. **स्थावरस्थाणुः–** स्थावरेष्वपि स्थितः । अणोरणुतरश्चायम् । या च स्था कूटस्था रमा तस्या अयं वरः । सर्वत्र च स्थितोऽणुतमश्चा-

यम् । स्थावरेषु स्थाणुतया स्थितः स्थावरस्थाणुः । स्थावरेषु स्थाणुषु च तन्नामान्तर्यामी स्थितः । स्थः स्वे महिम्नि स्थितः । अवरेषु ब्रह्मादिषु च स्थितः । स्थित एव सन् अणति गच्छति चायं सर्वत्र । स्थितः सन् अवति रमते च रमयति च स्थापयति च अणति आणयति च ॥

४२९. **प्रमाणम्–** प्रमाणगतः प्रमाणनामा । सर्वाभिश्च प्रमाभिरिदमेवाण्यते परं ब्रह्म । प्रकृष्टश्च मया रमयाऽण्यते च । प्रमैः प्राज्ञैरण्यते । 'प्र' इति 'मा' इत्यव्ययाभ्यामण्यते । अधिकमुपरि (९५९) ॥

४३०. **बीजम्–** जगद् व्यञ्जनाद् बीजम् । विभिर्ज्ञानिभिरिज्यते । बलेनेच्छया च जायते ॥

४३१. **अव्ययम्–** न व्येति न विक्रियते । न वियन्ति चाऽकाशादीन्यनेन । अश्च वीन् ज्ञानिनोऽयते च । अवीनज्ञानिनोऽप्ययते । अश्च विना गरुडेनायते च । अविष्वपि गतोऽयम् । अवनादवि । सर्वगत्वा-दयम् । अव्यमवनीयं याति च ॥

४३२. **अर्थः–** सर्वैरर्थ्यते । सर्ववेदार्थश्चायम् । अयमेव च परमपुरुषार्थः ॥

४३३. **अनर्थः–** जगत्सर्जनेनास्य स्वतः न कोऽप्यर्थः । दुष्टानामर्थं हन्ति । अनर्थकृच्चायं तेषाम् । अनिति अर्थ्यते चायम् ॥

४३४. **महाकोशः–** महान् ब्रह्माण्डकोशोऽस्य स्वमिति महाकोशः । वेदानां चायं महान् कोशः । महच्च कं सुखमस्य, वष्टीति इच्छारूपत्वा-दुशश्च । महाकश्चायमुशश्च । पञ्चकोशाश्चान्नमयादयोऽस्य पञ्च-रूपस्याऽवासस्थानम् । कोशाः शब्दनिलयाः । अयं सर्वशब्दानां निलय इति महाकोशः ॥

४३५. **महाभोगः–** महान् भोगः प्रजापतेः । अन्ते सर्वग्रासात् । अनन्तसुख-त्वाच्च । महानाभोगो विशालता चास्य । महांश्चास्य गुणाभोगः । महनीयश्चायं आभोगः पूर्णभोगश्च । महती भाऽस्येति महाभः । औ रुद्रे गतश्च । महान् शेषभोगः शयनमस्य ॥



४३६. **महाधनः–** सर्वं धनमस्येति महाधनः । ज्ञानाख्यं महद् धनमस्माद् भवति । अधना अपि येन महान्तो भवन्ति ॥ ५९ ॥

**अनिर्विण्णः स्थविष्ठो(ऽ)भूर्द्धर्म्मयूपो महामखः ।**
**नक्षत्रनेमिर्न्नक्षत्री क्षमः क्षामः समीहनः ॥ ६० ॥**

४३७. **अनिर्विण्णः–** कामितस्यालाभेन हि निर्विण्णा भवन्ति । अयं तु पूर्णकाम इत्यनिर्विण्णः । न निर्विण्णा जायन्ते अनेन ज्ञातेन । अकारवाच्यः, नितरां विन्नश्च सर्वस्य । निर्विण्णा नितरां लब्धार्था न भवन्त्यसन्तोऽनेनेति चानिर्विण्णः । अधिकमुपरि (८९३) ॥

४३८. **स्थविष्ठः–** द्वितीयं रूपम् । त्रिपश्चाशमाद्यम् । दिवं च पृथिवीं चान्त-रिक्षमपि व्याप्य स्थित इति स्थविष्ठः । व्याप्तरूपेण सर्वत्रस्थः, बिम्बरूपेण प्रतिजीवं विशिष्य स्थितश्च । स्थिरं वं ज्ञानं बलं वा । तद्वन्तः स्थविनः । तेष्वयं तिष्ठति ॥

४३९. **भूः (अभूः)–** भुवि स्थितः, भूनामा । आनन्दरूपोऽयं भवति । अनेन च सर्वं भवति । स्वयं न केनापि भवति जायत इत्यभूर्वा ॥

४४०. **धर्म्मयूपः–** एतदर्थं सर्वे धर्माः प्रवर्तंत इति धर्मपशोरयं यूप इव बन्धनस्थानम् । धारकाणां देवानां वाऽयं यूपवत् बन्धनस्थानम् । धर्मेण यौतीति धर्मयूः प्रज्ञा । तामयं पाति । धारकत्वाद् धर्मः । जीवपशूनामयं यूप इव बन्धनहेतुः ॥

४४१. **महामखः–** मखाः अनेनैव यज्ञपुरुषेणाऽराधितेन महान्तो भवन्ति । मखमिति धनम् । महच्च विश्वाख्यं धनमस्येति महामखः । मखमिति यशः । महच्चास्य यश इति महामखः । महनीयोऽयम् । अमं अमितं चास्य खं ज्ञानमिति महामखः ॥

४४२. **नक्षत्रनेमिः–** शिंशुमाररूपेण ध्रुवलोके स्थित्वा नक्षत्राणि नियमयन् नक्षत्रनेमिः । नक्षाणि अक्षयाणि त्रायते, नियमयति च ॥

४४३. **नक्षत्री–** नक्षत्राणामयं स्वामी । चन्द्रगतश्च विशेषतः । नक्षा नक्षया अनिकेतनाः । तेषां निकेतनं भूत्वा त्रायते ॥

४४४. **क्षमः–** सर्वत्र क्षमत इति क्षमः । सर्वसमर्थः । भक्तानामपराधं क्षमते च । क्षश्च मश्च ॥

४४५. **क्षामः–** अमिताः क्षाः क्षयाः मन्दिराण्यस्येति । क्षपणात् क्षः । अमितत्वादमः । अणोरणुतरत्वाच्च क्षामः । क्षामांतर्गतः क्षामडा-मरादिहेतुश्च तन्नामा । अर्थान्तरं तूपरि (८५८) ॥

४४६. **समीहनः–** स्वकार्येषु स्वयं समर्थतया ईहते, अन्यांश्च तत्तत्कार्येषु समीहयतीति समीहनः । समीहाः सम्यक् चेष्टाः । तान् नयति चायम् । समीचीनमेव चेहते ॥ ६० ॥

**यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सताङ्गतिः ।**
**सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ६१ ॥**

४४७. **यज्ञः–** यज्ञगतः यज्ञनामा । विष्णुमेव यजन्तीति यज्ञः । येन वायुना ज्ञायत इति यज्ञः । यजं यजनं नयतीति यज्ञः । अर्थान्तरं तूपरि (९७१) ॥

४४८. **इज्यः–**कृष्णो मुक्तैरिज्यते वीतमोहैरिति मुक्तैरपीज्यत्वादिज्यः । इच्छया ज्या यस्य धनुषि सोऽपीज्यः । इष्टा ज्या भूमिर्यस्येति चेज्यः ॥

४४९. **महेज्यः–** येय इज्यास्तेषु महानयम् । महती चेज्याऽस्य । महनीयश्चायमिज्यश्च ॥

४५०. **क्रतुः–** यज्ञेषु प्रत्यहं त्रीणि सवनानि क्रतवः । तत्र गतस्तदाराध्यः क्रतुः । ज्ञानरूपत्वाच्च । संसारचक्रात् तारयतीति च क्रतुः ॥



४५१. **सत्रम्–**सर्वैः सङ्गत्य क्रियमाणो यज्ञः सत्रम् । तत्रगतस्तदाराध्यः । तत्कर्तॄंश्च सतः त्रायते । त्राणाख्येन च कर्मणा सह वर्तते । समानं त्रायते च ॥

४५२. **सताङ्गतिः–** द्वितीयं रूपम् । १८४तमं प्रथमम् । सतां गतिरिह च मोक्षे च । नित्याविनाभावसूचनायालुक् । सारत्वात् सः । ततत्वात् तः । अन्तकत्वादम् । गम्यत्वाद् गतिः ॥

४५३. **सर्वदर्शी–** सर्वं स्वतः पश्यन्, ज्ञानिनां दर्शयति च सर्वम्, यत् तेषां दर्शनीयम् । स्वप्ने दृष्टं चादृष्टं च सच्चासच्च सर्वं दर्शयतीति सर्व-दर्शी । सर्वे दर्शा अस्याऽराधनाय भवन्ति । ऋतं यथार्थविज्ञानं च शमानन्दश्चास्य स्त इति ऋशी । सर्वदश्च ऋशी चायम् । सर्वः पूर्णश्च दर्शी चायम् ॥

४५४. **विमुक्तात्मा–** सर्वैर्दोषैर्विमुक्तोऽयं परमात्मा । सन्तश्चानेन संसारान्मुक्ता भवंति । विमुक्तः ज्ञानिनामात्मा वायुर्ब्रह्मा वाऽनेन । विमुक्ता अमुक्ता असन्तश्चानेन । नामरूपाद् विमुक्त इत्यमुक्त उच्यते इति हि भगवत्पादवचनम् । वयः ज्ञानिनः मुक्तात्मानोऽनेन । विविधतया मुक्ताश्च । विश्चायं सर्वदोषमुक्तश्चायं सर्वान्तर्यामी च ॥

४५५. **सर्वज्ञः–** सर्वं जानातीति, सर्वेऽप्यनेन जानन्तीति । सर्वश्चायं ज्ञश्चेति । सर्वं ज्ञपयतीति च सर्वज्ञः । अधिकमुपरि (८१९) ॥

४५६. **ज्ञानमुत्तमम्–**ज्ञानं च मुच्च ज्ञानमुदौ । ज्ञानानन्दतमम् । उत्तमं ज्ञानं वा । नामत्वादैकपद्यं स्वरसम् । उत्तमज्ञानगतस्तन्नामा च ॥ ६१ ॥

**सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।**
**मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ६२ ॥**

४५७. **सुव्रतः–** शोभनं भक्तरक्षणाख्यं व्रतमस्य । ‘सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम’ इति

हि तस्य व्रतम् । भक्ताश्च अनेनैव सुव्रतिनो भवन्ति । सुखरूपे भगवत्येव च सर्वं व्रतं तेषाम् । स एव वरणीयश्च तेषाम् । अधिकमुपरि (८२२) ॥

४५८. **सुमुखः–** सुन्दरं मुखमस्य सुमुखः । ज्ञानिनां सदा सुमुखोऽयम् । सुखात्मकं सर्वविद्यात्मकं च मुखमस्य । सुखवतां प्रमुखश्चायम् ॥

४५९. **सूक्ष्मः–**स्थूलेन्द्रियागोचरत्वात् सूक्ष्मः । सुखदा उत्तमा क्ष्माऽनेन । सूरीन् क्षमते चायम् । अणोरणीयान् जीवस्याप्यन्तर्यामी ॥

४६०. **सुघोषः–** मेघगम्भीरनिस्वनः । सर्वे वेदाः नादाश्च अस्यैव व्याहृतय इति च सुघोषः । सतां सुखं हन्ति ये ते सुघा असुराः । भगवन्तमेव वा निराकरणेन । तानोषतीति सुघोषः । उष दाहे ॥

४६१. **सुखदः–** सतां सुखं ददाति । असतां सुखं द्यति । तदर्थं सतां समीचीनानि खानि इन्द्रियाणि ददाति । असतां च द्यति । सु निर्दुष्टं खं सुखं ददाति । 'सुखं खमिति चोच्यते' । ज्ञानानन्दरूपं स्वात्मानमेव ददाति । अधिकमुपरि (८९०) ॥

४६२. **सुहृत्–** जीवानां नित्यसुहृत् । सदा सुमनाः । सुखेन सर्वं हरति । दुष्टानां सुखमेव हरति । सुष्ठु हृदयमस्य वासस्थानम् ॥

४६३. **मनोहरः–** साक्षान्मन्मथमन्मथः । ज्ञानरूपत्वान्मनः । सर्वहरणाद्धरः । मनसः जीवस्य स्वमभीष्टमाहरतीति च मनोहरः ॥

४६४. **जितक्रोधः–** जितः क्रोधोऽनेन; जिताश्च क्रोधमानिनः क्रोधवशाश्च दैत्याः । भक्तैर्जितश्च दुष्टेषु क्रोधरूपश्च ॥

४६५. **वीरबाहुः–** वीरौ दुष्टदमनदक्षौ बाहू अस्येति वीरबाहुः । वीरो वायुर्वाहयत्येनम् । वीराः क्षत्रियाः यस्य बाहुभ्यामजायन्त । 'बाहू राजन्यः कृतः' ॥



४६६. **विदारणः–** दुष्टान् दारयति । विना गरुडेन तदभिमन्यमानेन वेदवाङ्मयेन दुर्मतानि दारयति । 'हिरण्यकशिपोर्वक्षोविदारणनखाङ्कुशः' इति च ॥ ६२ ॥

**स्वापनः स्ववशो व्यापी नैकात्मा नैककर्म्मकृत् ।**
**वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ६३ ॥**

४६७. **स्वापनः–** कल्पावसाने जीवान् स्वापयति । प्रत्यहं च निशासु । स्वापाख्यमज्ञानमपनयति । स्वीयानां स्वं वित्तमपनयति । 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्' इति हि स्मरन्ति । भक्तानां स्वं संसारमपनयति । स्वं मुक्तावापयतीति स्वापनः । सुखमापयतीति च स्वापनः । दुष्टानां दुरापोऽपि भक्तानां स्वापो नेता । सुखमापयति, स्वात्मानमेवाऽपयति च ॥

४६८. **स्ववशः–** स्वयमेव स्वस्य वशः नान्यस्य कस्यचित् । स्वः स्वतंत्रः, वश इच्छारूपश्च । स्वरूपभूतं वं शं च ज्ञानं सुखं चास्य ॥

४६९. **व्यापी–** स्वेषां सर्वमभीष्टमापयति । स्वयं सर्वत्र व्याप्नोति । विशिष्टांश्च भक्तान् विना गरुडेन वेदेन वा प्राप्नोतीति व्यापी । विविधमापयति, विलक्षणमापयति, विशिष्टमापयति । वीन् ज्ञानिन आप्नोति ॥

४७०. **नैकात्मा–** अनेकानि कर्माणि कुर्वन्, तदर्थं लीलया स्वरूपभूतान्येवानन्तानि रूपाणि धत्त इति नैकात्मा । नैके किंतु परस्परं भिन्ना जीवा अनेन भवंतीति नैकात्मा । अनन्तानां जीवानामयमात्मा अंतर्यामी स्वामी च । नश्चैकश्चायमात्मा ॥

४७१. **नैककर्मकृत्–** अनन्तानि कर्माणि करोत्ययम् । अनन्तानां च जीवानां बिम्बत्वादयमेव सर्वकर्माणि करोति । नहि प्रतिबिम्बस्य क्रिया । असुराणां कर्माणि कृन्तति चायम् ॥

४७२. **वत्सरः–** वत्सभूतान् ब्रह्मादीन् रमयति । वत्सरगतत्वात् तन्नामा ॥

४७३. **वत्सलः–** भक्तवत्सलः । वत्सान् लाति वा । वत्स इव भवन् रमयति वसुदेवादीन् । वत्सः सन् वा लाति ॥

४७४. **वत्सी–** ब्रह्मादिभिः जीवजातैः वत्सवान् वत्सी । ब्रह्मा वायुर्वा प्रथमोऽस्य वत्स इति वत्सी । श्रीवत्साङ्कितवत्सवान् वत्सी ॥

४७५. **रत्नगर्भः–** सागरस्य रत्नगर्भतामापादयन् तत्र गतस्तन्नामा । रत्नमिति रतिः । 'रत्नधातमम्' इति श्रुतेः । आनन्दगर्भश्च रत्नगर्भः । जीवरत्नभूता ब्रह्मादयोऽस्य गर्भे । गुणरत्नगर्भो वा ॥

४७६. **धनेश्वरः–** सर्वेषां बाह्यान्तराणां धनानामीश्वरः । धनेशानां चायं वरः ईश्वरः । धारकश्चायम्, ईश्वरान्तररहितत्वान्नेश्वरश्च । ज्ञानधने साधने वा परिपूर्णे सति साधकं भक्तं अश्वः हयग्रीवः सन् रमयति । सर्वेषामाराधनानामीश्वरश्चायम् ॥ ६३ ॥

**धर्म्मगुब् धर्म्मकृद् धर्म्मी सदसत् क्षरमक्षरम् ।**
**अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ६४ ॥**

४७७. **धर्मगुप्–** धर्मस्य गोप्ता धर्मगुप् । धर्मदेवतायाश्च गोप्ता । धर्मराजस्य च । धारकाणां देवानां च गोप्ता ॥

४७८. **धर्मकृद्–** स्वयमपि धर्मं करोति, आचरति लोकशिक्षार्थम् । असतां च धर्मं कृन्तति । अयमेव च धर्माधर्मव्यवस्थाकृत् । अयं धर्मः, अयमधर्म इति चांततः भगवद्वचनादेवावसीयते ॥

४७९. **धर्मी–** धर्माधारत्वाद् धर्मी । सर्वशुभधर्माश्रयत्वाद् धर्मी गुणपूर्णः ॥

४८०. **सत्–** भक्तानामभिव्यक्तस्वरूपः । ज्ञानरूपः । निर्दोषः । साद्यत्वात् सत् । पृथिव्यादित्रयगतस्तन्नामा । प्राणगतस्तन्नामा ॥



४८१. **असत्–** अभक्तानामनभिव्यक्तः । वाय्वाकाशगतस्तन्नामा । नास्त्यतोऽन्यत् सत् इति तदेवासत् । अतिशयितज्ञानरूपम् । सर्वात्मना निर्दोषम् । अनासाद्यत्वादसत् ॥

४८२. **क्षरम्–**क्षरेषु ब्रह्मादिषु गतं क्षरम् । भक्तानामभीष्टक्षरणाच्च क्षरम् । क्षपयन् रमते चेति क्षरम् । क्षये स्वनिलये क्षीरोदधौ वा मोक्षे वा रममाणं क्षरम् ॥

४८३. **अक्षरम्–** अक्षरे श्रीतत्वे गतमक्षरम् । अश्नुते व्याप्नोति सर्वमित्यक्षरम् । अक्षेषु रमणादक्षरम् । न क्षरति न नश्यतीत्यक्षरम् । अधिकमभीष्टक्षरणं क्षरम् । अक्षयाद् रतिरूपत्वाच्चाक्षरम् । अकारादिक्षकारान्तेषु एकपञ्चाशद्वर्णेषु रमते वाच्यतयेति चाक्षरम् । अं च क्षं च रं चेत्यक्षरम् । 'सदसत् क्षरमक्षरम्' इति सर्वेषां विरुद्धार्थानां पदानां भगवति समाहारमाह ॥

४८४. **अविज्ञाता–** सुखदुःखादीन् विपरीतं ज्ञाता जीवो विज्ञाता । स न भवतीत्यविज्ञाता । अकारवाच्यश्च सर्वविज्ञाता च । न विद्यते यतोऽधिको विज्ञातेति च । अवतीत्यविः । ज्ञाता च । ज्ञात्वा ज्ञात्वाऽवतीति । न विज्ञाता कोऽप्यस्येति चाविज्ञाता । ये भगवन्तं भक्त्या हृदयगुहायामवन्ति तेऽवयः । तेषामयं भक्तिं जानाति । अविषु उरणेषु नकिञ्चिज्ज्ञानत्सु स्थितोऽपि स्वयं सर्वज्ञाता । अविज्ञातरि मूढतमे नरि स्थितोऽयं तदन्तर्यामी स्वयं चाविज्ञातृनामा न किमपि तस्य विशिष्य ज्ञापयतीति । स्वातन्त्र्येऽन्तर्नीतणिच् ॥

४८५. **सहस्रांशुः–** सहस्रांशौ सूर्ये गतस्तन्नामा । सहस्रं अंशवः भिन्नांशा जीवा अस्येति च । स्वयं चानन्ततेजाः सहैव सरन्तोंऽशवो जीवा यस्य । गुणैः सह सरन्तोंऽशवोऽवताररूपाण्यस्य ॥

४८६. **विधाता–** द्वितीयं रूपम् । चतुश्चत्वारिंशमाद्यम् । न केवलं विः पक्षी गरुडः एनं धत्ते । किन्तु वस्तुतः अयमेव तमपि धत्ते । विधातुरन्तर्यामी

तन्नामा। विशेषेण धत्ते पोषयति मुक्तानिति च। 'यो नः पिता जनिता यो विधाता' । बहुविधायाः संसृतेस्तारयति ॥

४८७. **कृतलक्षणः–** वक्षसि लक्षणभूता लक्ष्मीरस्येति कृतलक्षणः। वामभागे कौस्तुभलक्षणश्च । सर्वेषामपि लक्षणानि तत्तदसाधारणधर्माः अनेन कृतानि । सर्वगुणपूर्ण इति ज्ञानिभिः कृतलक्षणः । लक्षयन्ति वस्तु-स्वरूपमिति लक्षणानि शास्त्राणि चानेनैव कृतानि । ये स्वात्मन्येव कृतलक्षास्तान् मोक्षं नयति चायम् ॥ ६४ ॥

**गभस्तिनेमिः सत्वस्थः सिंहो भूतमहेश्वरः ।**
**आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ६५ ॥**

४८८. **गभस्तिनेमिः–** सूर्यादितेजसां गभस्तीन् नियमयतीति गभस्ति-नेमिः । गभस्तिं सूर्यं च नियमयति । गभस्तिमग्निजायां स्वाहां वा नयति । 'गभस्तिः किरणे सूर्ये ना स्वाहायां तु योषिति' इत्यभिधा-नम् । गगने बभस्ति भातीति गभस्तिः सन् जगन्नयति । गं स्वोदरगतम्, तत उदरान्निर्गतं जगदन्ते बभस्ति भक्षयति, भक्षयित्वा चोदरस्यान्तर्नयतीति गभस्तिनेमिः । भस भक्षणदीप्त्योरिति प्रतनो धातुपाठः । गगने बब्धः भासेते इति गभस्ती सूर्यचन्द्रौ नियमय-यति । गगने बप्सति भासन्त इति गभस्तयो नक्षत्राणि नियम-यति ॥

४८९. **सत्वस्थः–** सत्वेषु जीवेषु स्थितः। सात्विकं मनो वा सत्वं। सत्वगुणो वा । तत्र स्थितोऽयमभिव्यज्यते ॥

४९०. **सिंहः–**द्वितीयं रूपम् । २००तममाद्यम् । शत्रून् सिंहतीति सिंहः । षिहि हिंसायाम् । सिंहगतस्तन्नामा । हिनस्तीति वा सिंहः । अविद्यासिंचं हन्ति । सितं शुद्धं हन्ति गच्छति । भीरूणां सिंह इव सिंहः ॥



४९१. **भूतमहेश्वरः–** भूतानां जीवजातानां मुक्तानां वा महानयमीश्वरः । मुक्तावपि हि ब्रह्माद्या अवान्तरेश्वराः सन्ति । महाभूतश्चायं महेश्वरश्चायमिति च । महद् भूतम्, महेश्वरश्चायम् ॥

४९२. **आदिदेवः–** द्वितीयं रूपम् । ३३५तमं प्रथमम् । सर्वेषामादिश्च देवश्चायम् । आदौ चायं देवः । 'नारायणो वा इदमग्र आसीत्' इति ह्यामनन्ति । सर्वादिश्चतुर्मुखस्याप्ययं देवः । आदिजीवः दीव्य-त्यनेन । सृष्टेरादौ प्रळयार्णवे दीव्यति क्रीडति ॥

४९३. **महादेवः–** महांश्चायं महनीयश्चायं देवः । महादेवे शिवे च गतस्त-न्नामा । महनीय आदेवः । अदेवेषु असुरेषु गतस्तन्नामा । तान् देवयतीत्यदेवः ॥

४९४. **देवेशः–** देवानामपीष्टे । देवश्च ईशश्च । दश्च, इच्छाज्ञानस्वरूप-त्वादिवशब्दवाच्यश्चेशश्च । याः लक्ष्म्याः ईशः । तस्याः शं सुखमनेनेति च । दातृत्वाद् दे । वस्य वायोरीश्च ॥

४९५. **देवभृद्गुरुः–** देवभृतां ब्रह्मवायुशिवादीनामप्ययं गुरुः । देवभृच्च गुरुश्च वा । देशिकानां वं ज्ञानं बिभर्ति, गुरौ बृहस्पतौ गत-श्चायम् ॥ ६५ ॥

**उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।**
**शरीरभूतभृद् भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ६६ ॥**

४९६. **उत्तरः–** सर्वस्मादुत्तम इत्युत्तरः । सर्वमुत्तत्तारेति च । सर्वेऽपि उत्तरंत्यनेनेति च । उच्चान् तनोति रमयति च ॥

४९७. **गोपतिः–** गवां वेदानां पतिः । ज्ञानानां पतिः । गोः स्वर्गस्य भूमेर्वा पतिः । गां जलं पतति मत्स्यादिरूपेणेति गोपतिः । गवां धेनूनां च पतिः । गोपानां तिरानन्दो येन । अधिकमुपरिष्टात् (५९७) ॥

४९८. **गोप्ता–** सर्वस्य गोप्ता। स्वयं गुप्ततया स्थित इति गोपयत्यात्मानमिति गोप्ता । अधिकमुपरिष्टात् (५९८) ॥

४९९. **ज्ञानगम्यः–** ज्ञानेनैव गम्यः । ज्ञानरूपश्च ज्ञानिगम्यश्च । सर्वज्ञेन प्राणेन गम्यश्च । सर्वज्ञे प्राणे च गम्यः । ज्ञश्च अनगम्यश्च वा ॥

५००. **पुरातनः–** पूर्वेषां ततः पूर्वेषामपि पूर्वं भवतीति पुरातनः । पूर्वमेव सर्वं तनोतीति च पुरातनः । पुरेषु शरीरेषु तत्वनियमनार्थं येऽतन्ति ते पुरातास्तत्वमानिनो देवाः । तेषामप्ययं नियामकः ॥

**॥ इति नाम्नां पञ्चमं शतकम् ॥**

५०१. **शरीरभूतभृत्–** शरीरे भूतानि स्थितानि जीवजातानि बिभर्ति । शरीराणि च भूतानि च बिभर्ति । शरीरभूतं जीवं बिभर्ति । शराणां शरीराणामात्मनां वेरणात् शरीरम् । भूतभृच्च । जीवशरीरे भूतः सन् बिभर्ति ॥

५०२. **भोक्ता–** द्वितीयं रूपम् । १४३तमं प्रथमम् । सर्वं भुनक्ति च । आनन्दं भुङ्क्ते च । सर्वं जगदप्यन्ते भुङ्क्ते । भोगान् वितरति । संसारभोगात् तारयति च । आदन्ततायां भकारेणोक्ता चेयं परदेवता भगवती ॥

५०३. **कपीन्द्रः–** कपीन्द्रे हनूमति स्थितस्तन्नामा । कमानन्दं केवलं पिबन्तीति कपयो मुक्ताः । तेषामयमिन्द्रः स्वामी । 'कपिर्वराहः श्रेष्ठश्च' इति भारतवचनात् कपिः श्रेष्ठः वरः वराह इति चैकोऽर्थः । तेन कपीन्द्र इति श्रेष्ठानामपीन्द्रः । कपिश्चेन्द्रश्च ॥

५०४. **भूरिदक्षिणः–** भूरयः दक्षिणा एतदर्थं यज्ञेषु वितीर्यन्त इति भूरि-दक्षिणः । ब्रह्मादिभ्योऽपि भूरितमा दक्षिणा दक्षिणामानिनी रमा एतस्य भार्येति भूरिदक्षिणः । दक्षिणाः दाक्षिण्यशीला दक्षा वा ब्रह्मा-दयो भूरयोऽस्य तनया इति भूरिदक्षिणः ॥ ६६ ॥

**सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः ।**
**विनयो जयः सत्यसन्धो दाशार्हः सात्वताम्पतिः ॥ ६७ ॥**



५०५. **सोमपः–** सोमलतां पाति । चन्द्रमसं पाति । सोमं मनः पाति । मनोमानिनः शिवादीन् पाति । सोमं पवमानं पाति । उत्कृष्टया मया ज्ञानेन सहितः सोम उच्यते । सोमश्च पालनात् पश्च । यजमाने स्थित्वा सोमं पिबति च । यज्ञपुरुषो भूत्वा अग्नौ हुतं च सोमं पिबति । सारत्वात् सः उत्कृष्टज्ञानत्वादुमः, उश्च मश्च वा, पश्च ॥

५०६. **अमृतपः–** धन्वन्तरिरूपेणामृतं पाति । आनन्दामृतरसं पिबति । अमृतान् मुक्तांश्च पाति । अन्तगत्वादन्तकत्वाद् वा अम्पदवाच्यः, ऋतं पिबन् वा अमृतपः ॥

५०७. **सोमः–** सोमे चन्द्रे स्थितस्तन्नामा । उमया सहिते शिवे वा स्थितस्तन्नामा । सोमे पवमाने स्थितः । उत्कृष्टया मया प्रमया रमया च सहितः सोमः । सश्च, उश्च, मश्च ॥

५०८. **पुरुजित्–** पुरून् जयति । पुरं जयति । पुरे च जयति सर्वोत्कृष्टो वर्तते ॥

५०९. **पुरुसत्तमः–** पुरुश्चायं निर्दुष्टतमश्चायमिति पुरुसत्तमः । सत्तम इति ज्ञानितमो वा । पुरूणामप्ययं सत्तमः । पुरुषु चायं सत्तमः । पुरेषु चायम् । पुरु सरतामयं श्रेष्ठः ॥

५१०. **विनयः–** मूर्तिमानिव विनयः । विविधं जगन्नयति । विना गरुडेन चायं नीयते । वस्तुतः विं गरुडमप्ययमेव नयति । वीन् ज्ञानिनोऽपि नयति । ज्ञानिषु विशिष्टानपि नयति । विशिष्टं नयति । विलक्षणं नयति । विचित्रं नयति ॥

५११. **जयः–** जयति सर्वोत्तमो भवति । जयति शत्रूनभिभवति । जातानिजातानि याति । जनयति च यमयति च ॥

५१२. **सत्यसन्धः–** सत्याऽस्य संधा प्रतिज्ञेति सत्यसन्धः । सत्यवचनैः सह सन्धत्ते । सत्यश्चायं संधानकृच्च लोकानाम् ॥

५१३. **दाशार्हः–** दशार्हकुले जाता दाशार्हा यादवाः । तेषु गतोऽयं तन्नामा । स्वयं च दशार्हाणां कुले जातः । भक्तिर्ज्ञानं वैराग्यं प्रज्ञा मेधा धृतिः स्थितिः योगः प्राणः बलमिति दशगुणार्हो दशार्हो वायुः । तस्यायं स्वामी दाशार्हः । दाशैः दातृभिरर्ह्यते पूज्यते । स्वयं दाशकन्यायां जातत्वाद् दाशः अर्हश्च । दाशाय सर्वस्वदानाय चार्हः । दातृभिराशयाऽर्ह्यते । दातॄणामाशा अर्हयति मानयति । आ समन्तात् शं सुखमर्हति इत्याशार्हः । दश्चाऽशार्हश्च । मोक्षदातृत्वाद् दश्च आनन्दमयत्वादाशश्च । अर्हणीयत्वादर्हः । अरिहन्तृत्वादप्यय-मर्हः । ददाति आशामथ, द्यति चासतामा समन्तात् शमानन्दम् ॥

५१४. **सात्वताम्पतिः–** सात्वन्तः सात्वतकुले जाता यादवाः । सत्वगुणवन्तो वा । तेषामयं पतिः । सात्वाः सात्विकाः । तेषु ततः, अम्पदवाच्यः सर्वान्तिकत्वात्, पातृत्वात् पतिश्च सर्वेषाम् ॥ ६७ ॥

**जीवो विनयितासाक्षी मुकुन्दोऽमितविक्रमः ।**
**अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ६८ ॥**

५१५. **जीवः–** प्राणधारकत्वाज्जीवः । जयति जीवतीति वा जिः । तस्येच्छां वर्तयति । जयवन्तो वा जिनः । जननवन्तो वा । तेषामीं सम्पदं वर्तयति वर्धयति वा । जयशाली लक्ष्मीवरो वा ॥

५१६. **विनयितासाक्षी–** विनयितायाः साक्षादीक्षिता । विनयिषु ततः आ साक्षी च वा । सारत्वात् सः । अक्षवानक्षी । स्वयं च मूर्त्तिमतीव विनयिता । विनयी च सर्वत्र ततश्च अश्च सश्च अक्षयत्वादक्षीणत्वादक्षी चायम् ॥

५१७. **मुकुन्दः–** मुकुं मुक्तिं ददातीति मुकुन्दः । मुक्तानां कुं कुत्सितं संसारं द्यति । मुह्यतां मुग्धानां कुत्सितं दुःखं ददाति । मुखे कुन्दमिव मन्दहसितमस्य । कुं कुन्दसदृशं दं दरहसितं वा । केषाञ्चन मुं मुक्तिं ददाति । केषाञ्चन कुं संसारं ददाति । संसारे मुदं च कुं च दुःखं च ददाति ॥



५१८. **अमितविक्रमः–**अमिता विशिष्टाश्चास्य त्रयः क्रमाः । विक्रमाः पराभि-भवनशक्तयो वा । अं चायमितविक्रमश्च । अमितश्च विक्रमश्च । विशिष्टं क्रं कर्म, विशिष्टा मा ज्ञानं चास्येति विक्रमः । अं इति इतः ज्ञातश्च । अः इति मितो ज्ञातश्च । अधिकमुपरि (६४९) ॥

५१९. **अम्भोनिधिः–** अम्भोनिधौ गतस्तन्नामा । अम्भोधिगतानामम्बरगतानां चाम्भसां निधिराश्रयः । अम्भसां निधिराश्रयः सन् गर्भं जनयति । आपः पुरुषवचसो भवन्ति । अं ब्रह्मात्र भासते इत्यम्भांसि ब्रह्मादयः जीवाः, विशिष्य वायुर्वा । तस्य निधिराश्रयः । अं बिभर्तीत्यम्भा जगदम्बा रमा । तस्या उच्चः निधिराश्रयः सम्पद् वा । जगदन्ते भातीत्यम्भश्च सर्वेषां निधिश्चायम् ॥

५२०. **अनन्तात्मा–** अनन्ता अस्याऽत्मान अवताराः । अनन्तश्चायमात्मा च । अनंतस्य चायमात्मा । अनन्ता आत्मानश्चास्य प्रतिरूपाः । अनं प्राणं तनोति चायमात्मा । अनस्याप्यन्त आत्मा च ॥

५२१. **महोदधिशयः–** महोदधौ कारणार्णवे क्षीरार्णवे वा शेते । महान्त उदाः जीवसंघाः यत्र निधीयन्ते स महोदधिः साधनशरीरम् । जीवकलामानिनौ ब्रह्मवायू वा महोदधी । तत्रायं शेते । तयोः शयौ ज्ञानानन्दावनेनेति च । महोदधिश्च पुरिशयश्च ॥

५२२. **अन्तकः–** अन्तकृत्त्वादन्तकः । सर्वोत्तमत्वेनान्ते कीयते गीयते इत्यन्तकः । हृदयान्ते स्थितः आनन्दरूपश्चायमिति च अन्तकः । अन्तेऽवशिष्यमाणं यत् कं जलं तत्रायमित्यन्तकः । संसारस्यान्ते मौक्तं सुखं चानेनेत्यन्तकः ॥ ६८ ॥

**अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।**
**आनन्दो नन्दनो नन्दः सत्यधर्म्मा त्रिविक्रमः ॥ ६९ ॥**

५२३. **अजः–** तृतीयमिदं रूपम् । २०४तमं द्वितीयम् । ९५तमं प्रथमम् । आत् स्वात्मत एव स्वयं जायते । 'आनन्दत्वाद इत्युक्तः' इति

वचनादानन्दी सन्नेव जायते । आनन्दित्वादेव जनयति विश्वम् । आनन्दमयो जनकः । न विद्यतेऽतोऽन्यो जनयिता । अत एव चायमधिको जनकः । अजान्तर्गतस्तन्नामा ॥

५२४. **महार्हः**–महस्य उत्सवस्य अर्हः । पूजाया वा अर्हः । अर्हेषु वा महान् । महेषु मखेष्वयमेवार्ह्यते ॥

५२५. **स्वाभाव्यः**– स्वभावस्यायं नियन्ता । स्वयं तु केनाप्यभाव्यः । स्वैः आ भावनीयश्च हृदि । सु आभाव्यश्च । स्वयमेवाभान्तीति स्वाभाः स्वप्रकाशाः जीवा अनेनाव्याः । स्वाभैर्ज्ञानिभिः हृदि भक्त्या रक्षणीयश्च । स्वतन्त्रत्वात् स्वः । आ समन्ताद् भानादाभः । हृद्यन्तर्भानाद् वा । पितृलोकादिषु ईषद् भानाद् वा । अव्ययत्वादव्यश्च ॥

५२६. **जितामित्रः**– अमित्रा बाह्यान्तरा अस्माभिर्जिता भवन्त्यनेनैव । जितानि आ समन्तान्मित्राणि चानेन । जिताश्च देवशत्रवोऽनेन । जितेन्द्रियाणां मित्रं जितामित्रः । नामधेयत्वात् पूर्वपदवृद्धिः । 'मित्रे चर्षौ' इति हि स्मरन्ति । 'मित्रे च नामनि' इति युक्तं वचः ॥

५२७. **प्रमोदनः**– प्रमोदते प्रमोदयति च । प्रमया उदं जीवं नयति । प्रमां ज्ञानमुदं कर्म च नयति ॥

५२८. **आनन्दः**– आनन्दयति आनन्दति च । आनं प्राणं ददाति । द्यति च दुष्टानाम् । आनं चेष्टां च ददाति द्यति च ॥

५२९. **नन्दनः**– नन्दयति । नन्दं नयति च । आनन्दं नयति च । लीलया वसुदेवादीनां नन्दनो बभूव ॥

५३०. **नन्दः**– नन्दति नन्दः समृद्धः । आनन्दरूपश्च । नन्दे गतश्चायम् ॥

५३१. **सत्यधर्मा**– सत्या अस्य धर्माः ज्ञानानन्दादयः । सत्या भक्तानां धर्मा भवन्त्यनेन । सत्यं जगद् धारयति ॥

५३२. **त्रिविक्रमः**– त्रिषु लोकेषु, कालेषु, जीवेषु, वेदेषु च क्रमत इति त्रिविक्रमः ॥ **६९** ॥



**महर्षिः कपिलाचार्य्यः कृतज्ञो मेदिनीपतिः ।**
**त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ७० ॥**

५३३. **महर्षिः**– महं उत्सवं पूजां वा ऋषति जानाति । महांश्चायमृषिः महाज्ञानी । महर्षिगतश्चायं तेषां महर्षित्वप्रदः । मं मतिं हतिं चर्षति जानाति ॥

५३४. **कपिलाचार्यः**– कं पिबन् जगद् विलापयन् ज्ञानदश्चायमाचार्य इति कपिलाचार्यः । कपिरूपं लातीति कपिलो वायुस्तस्यायमाचार्यः । सोऽपि जगतामाचार्योऽनेन । कं पिबन्ति कपयो मुक्ताः तान् लात्ययमाचार्यः । कपिलावतारः सन् साङ्ख्याचार्यः । कपीन् लातीति कपिलो रामः सन् हनुमन्तं आकाशे चारयति । कपींश्च युद्धरङ्गे लङ्कायामा समन्ताच्चारयति । कं पिबन् कपिश्चायं लः लक्ष्मीपतिश्चायं सर्वाचार्यगतश्चेति कपिलाचार्यः ॥

५३५. **कृतज्ञः**– द्वितीयं रूपम् । ८२तमं प्रथमम् । कृतं जानन् कृतज्ञः । ज्ञानिभिर्मनसि कृतो ध्यातः ज्ञश्च । कृतेन कर्मणा ज्ञानं जनयतीति कृतज्ञः । 'कर्मणा ज्ञानमातनोति' इति हि श्रुतिः । कृतं कर्म ज्ञानेन ज्ञपयतीति कृतज्ञः ॥

५३६. **मेदिनीपतिः**– मेदिन्याः पतिः । स्वयमप्यवतीर्य मेदिनीं मेदिन्यां वा पतति गच्छति । मेदिनीपानां तिरानन्दोऽनेन । मेदिनीगतत्वान्मेदिनी च पतिश्च ।

५३७. **त्रिपदः**– त्रीणि पदानि अनन्तासनवैकुण्ठनारायणपुराण्यस्य । अकारोकारमकारा वा । तिस्रो व्याहृतयो वा नारायणाष्टाक्षरगतानि वा त्रीणि पदानि । त्रिपदया गायत्र्या चायमेव प्रतिपाद्यः । त्रयो वेद वा पदान्यवगतिस्थानान्यस्य । त्रिभिर्वेदैः त्रिभिः सात्त्विकराजसतामसैः त्रिधा पद्यते । त्रिषु लोकेषु पद्यते । त्रिविक्रमत्वाच्चायं त्रिपदः ॥

५३८. **त्रिदशाध्यक्षः–** तिस्रः दशाः जाग्रदाद्याः । तासामयमध्यक्षः । त्रिदशानां देवानां चाध्यक्षः । सृष्टिस्थितिसंहारा वा तिस्रो दशाः । त्रयाणां सत्वादीनां ज्ञानभक्तिवैराग्याणां च, वायोर्दशानां भक्त्यादि-गुणनामध्यक्षः । अर्थमूलानां त्रयोदशानर्थानामप्ययमेवाध्यक्षः । 'स्तेयं हिंसाऽनृतं डम्भः कामः क्रोधः स्मयो मदः । भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च । एते त्रयोदशानर्था ह्यर्थमूला मता नृणाम्' इति हि भागवते ॥

५३९. **महाशृङ्गः–** महत् वेदादिकं शृङ्गमस्य । मत्स्यादिरूपेषु च महत् शृङ्गमस्य । अनेन पर्वतानां महान्ति शृङ्गाणि भवन्ति । महच्च शृङ्गं प्रभुत्वमस्य । महानामा समन्तात् शृङ्गं प्राधान्यमनेन ॥

५४०. **कृतान्तकृत्–** वेदसिद्धान्तकृत् । कृतस्यान्तं करोति । कृतान्तमपि करोति । कृतान्तमपि कृन्तति । कृतस्य कर्मणो ज्ञानेनान्तकृत् । कृतस्य निर्णयकृच्च । ज्ञानिभिर्मनसि कृतः सन् तेषां संसारस्यान्त-कृत् ॥ ७० ॥

**महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।**
**गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ७१ ॥**

५४१. **महावराहः–** महावराहो वरेष्वपि महान् । धृतमहावराहरूपः । महांतो ये वरा ब्रह्माद्यास्तैरहेयत्वान्महावराहः । महनीया महान्तोऽप्यवरा यस्मात् स महावरः, अहेयश्च । महनीयः अवः रक्षकः, राहयति दुःखमिति राहश्च । महद् वं ज्ञानं बलं चास्य । रान्तीति रान् ज्ञानिनः न जहाति च ॥

५४२. **गोविन्दः–** द्वितीयं रूपम् । १८७तमं प्रथमम् । गोभिर्विन्दन्त्येनमिति गोविन्दः । गां भूमिं विन्दति अवताररूपैः । स्वयं तद्गतः । गां स्वर्गं विन्दन्ति पुण्यकृतश्चानेन । गवि चक्षुषि विन्दन्त्येनम् । गाव इति लोमानि । नरसिंहादिरूपेण लोमानि विन्दतीति च गोविन्दः ॥



५४३. **सुषेणः–** शोभना शत्रुदमनदक्षाऽस्य सेना भवति । षः चेष्टा, इः इच्छा, । णः बलानन्दौ च शोभना अस्य ॥

५४४. **कनकाङ्गदी–** कनकाङ्गदादिनानाभरणभूषितः । कनकाङ्गः सन् दीव्य-तीति च । कनन्ति सुखमयानि चास्याङ्गानि । कं सुखम्, नकं दुःखं च अङ्गभूतानां जीवानाम्, अङ्गेन शरीरेण द्वारभूतेन ददाति ॥

५४५. **गुह्यः–**गुह्यः छन्दस्सु । तानि हि छादयन्त्येनम् । हृदयगुहायां गतः । गुहं याति च । गुणगुह्योऽपि गुह्यो भवति ॥

५४६. **गभीरः–** ज्ञानानन्दादिभिरगाधतया गभीरः । ये गतभियस्तानीर-यति । गतभियां रतिदश्च । गं ज्ञानं भमानन्दं च ईरयति । गभी ज्ञानानन्दी ईरः येन । गभिनो मुक्तान् ईरयति । ये भियं रहयन्ति तेषु गतः ॥

५४७. **गहनः–** द्वितीयं रूपम् । ३८३तमं प्रथमम् । दुर्ज्ञेयत्वाद् गहनः । गं गणपतिं हं हरं च नयति । शत्रुगणहननाद् गहा वीराः । तानयं नयति ॥

५४८. **गुप्तः–** ज्ञानिभिर्गुप्तः । छन्दोभिश्च । सर्वभूतेषु गूढतया स्थितः । गवि उप्तः । गुहायां सुप्तः । गुणैः क्लृप्तः ॥

५४९. **चक्रगदाधरः–** यस्य कराळोळं चक्रं दुर्गारूपं, यस्य गदा पवमानः स चक्रगदाधरः । चक्रगदे तदभिमानिनौ दुर्गापवमानावधरयति । चङ्क्रमणाच्चक्रम् । सर्ववेदान् गदन् गदः । सर्वमधरयन्नधरः । आधरन्नाधरो वा । ऋचां चक्रं मण्डलम्, निगदश्च यस्याधरे स चक्रगदाधरः । वेदान् मुखतः समुद्गिरन्नित्यर्थः । दैत्यचक्रं गदया गदन् वा अधरयति । साधुचक्रं सतीं वाचं गदन् आधरति ॥ ७१ ॥

**वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।**
**वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ७२ ॥**

५५०. **वेधाः–** सर्वं विधत्त इति वेधाः । वेधसि गतस्तन्नामा । वेदानां धारकश्चायम् ॥

५५१. **स्वाङ्गः–** स्वरूपभूतान्यङ्गान्यस्य । स्वयमेव स्वस्याङ्गमङ्गी च । स्वां रमां गच्छति । स्वानि स्वीयानि ब्रह्मादीन्यङ्गान्यस्येति । सुवानि सुखज्ञानमयान्यङ्गान्यस्य । स्वतन्त्रत्वात् स्वः । अन्तकत्वादम् । सर्वगत्वात् सर्वज्ञत्वाच्च गः ॥

५५२. **अजितः–** न केनापि जितः । अजभक्ता अजिनः । तेषु ततः । अजमानिका जीवा अप्यजिनः । तानयं तानयति विस्तारयति । महत्तत्वमप्यजमानिकमित्यजि । तत्रायं गतः ॥

५५३. **कृष्णः–** द्वितीयं रूपम् । सप्तपञ्चाशं प्रथमम् । कृषौ भूमामवतीर्णः ण आनन्ददरूपः कृष्णः । तमः प्रति कर्षणाच्च कृष्णः । आकर्षणशक्तिदो भवन् भूमौ गत इति कृष्णः । चक्षुषैव कौरवसेनाया आयुःकर्षणाच्च कृष्णः । सर्वोत्कृष्टत्वाच्च कृष्णः । कृषेभूमेर्णो बलं येन । कृषिकर्मणा प्रजानामानन्दो येन ॥

५५४. **दृढः–** दृढोऽप्रकम्प्यः । दृशां गूढः । दृशि गूढः ॥

५५५. **सङ्कर्षणः–** सङ्कर्षति संहरतीति सङ्कर्षणः । सम्पूर्णगुणश्च दोषकर्षणात् कर्षणश्च । सर्वकर्ता सर्वचेष्टकः पूर्णानन्दः पूर्णबलश्च ॥

५५६. **अच्युतः–** तृतीयमिदमच्युताख्यं रूपम् । ३१९तमं द्वितीयम् । शत-तमं प्रथमम् । सर्वैर्गुणैः क्रियाभिश्च सदाऽप्रच्युतः । स्वधर्मतो ये न च्यवन्ते तेऽच्यवः । तेषु ततः । अधिकं च्योततीत्यच्युतः । अज्भिर्वाच्यतया युत इत्यज्युत एवाच्युतः । तृतीयोऽतिशये ॥

५५७. **वरुणः–** वरुणान्तर्गतस्तन्नामा । आवृणोति तमसा अज्ञानतो वेति वरुणः । वरः णः आनन्दोऽस्येति वरुणः । वरान् उपरि नयतीति वरुणः । भक्तान् वृणोतीति च वरुणः । व्रियते च भक्तैः ॥



५५८. **वारुणः–** वरुणेन स्तुतत्वाद् वारुणः । दुष्टानां वारयत्यानन्दमिति च । शत्रूणां वारणाच्च वारुणः । वः ज्ञानरूपः । वर्णतोऽरुणश्च । वा विकल्पेनारुणः । क्वचिन्नीलश्च । श्वेतश्च । असुराणां वा ज्ञानं रुणद्धि । सतां वं ज्ञानं न रुणद्धि ॥

५५९. **वृक्षः–** संसारव्रश्चनाद् वृक्षः । वृतसुखचेष्टत्वाच्च वृक्षः । ये तं वृणते तेषामक्षयः क्षयो निवासश्च । क्षि निवासे । वृक्षगतश्च वृक्षनामा । वृतरक्षो वा वृक्षः ।

५६०. **पुष्कराक्षः–**द्वितीयं रूपम् । चत्वारिंशमाद्यम् । भक्तानां पुष्टिकरः । न क्षपयति च तान् । अभक्तानामज्ञानपुष्टिकरः । न क्षमते च तान् ॥

५६१. **महामनाः–** उदारमनाः । महाज्ञानी वा । मनांसि अन्तःकरणानि जीवा वा अनेन महान्ति भवन्ति ॥ ७२ ॥

**भगवान् भगहाऽऽनन्दी वनमाली हलायुधः ।**
**आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ७३ ॥**

५६२. **भगवान्–** ऐश्वर्यादयः षड्गुणा अस्य सन्तीति भगवान् । अथच भाग्यवान् । 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भग-वच्छब्दवाच्यानि' । ज्ञानानन्दौ दीप्तिज्ञानौ वा भगौ । तद्वान् । स्त्रीणां भगेषु रतिकरः सन्निहित इति भगवान् । भगं माहात्म्यम् । तद्वान् भगवान् । भगो धर्मः । भगवान् धर्मप्रवर्तकः । भगो मोक्षः । दातृत्वेन तद्वान् भगवान् । भगो रविः । तत्र सन्निहितो भगवान् ॥

५६३. **भगहा–**स्वयं भगं हन्ति गच्छति । भक्तानां भगं भाग्यं गमयति । दुष्टानां च भगं हिनस्ति । स्त्रीणां भगं हन्ति सन्तानाय । दुष्टान् भगेनैव हन्ति नाशयति । पूर्ववदन्येऽप्यर्था ऊह्याः ॥

५६४. **आनन्दी–** स्वयमानन्दी । सर्वसमृद्धश्च । अन्येषामानन्दानामप्ययं स्वामी । तेन स एव आनन्दी । धनस्वामी हि धनी भवति । न धनवान् ॥

५६५. **वनमाली–** आजानुलम्बां वनमालां धरति। भजनीयानां सतां भजतां वा भक्तानां मालाऽस्यास्तीति वनमाली । वननीयश्च पङ्कजमाली चायम् । वनस्य मा शोभा । वनमायामयं लीनो भाति । वनमाला वनपङ्क्तिश्चास्य भवति । अयं तत्र गतो भवति ॥

५६६. **हलायुधः–** हलायुधान्तर्यामी तन्नामा। हलमप्यस्यैव सर्वायुधस्याऽयुध-मिति हलायुधः। हलगत आयुधगतश्च। हलतीति हलः। आयुध्यत इत्यायुधः। हला इत्याहूयाऽहूय युध्यते। हरेण सह युध्यत इति हरायुध एव हलायुधः ॥

५६७. **आदित्यः–** द्वितीयं रूपम् । नवत्रिंशं प्रथमम् । आदत्त इत्यादिः । आ अत्तीत्यादिः । ज्ञानानन्दरूपत्वात् त्यः । ततो यातीति च । तिमानन्दं भक्तानां यापयति च ॥

५६८. **ज्योतिरादित्यः–** सर्वेषां ज्योतिषामयमादौ भवः। ज्योतिषां ज्योतिः । अदित्यां जातः सन्नपि न शुक्रशोणितमयदेहः । किंतु ज्योतिर्मयः । ज्योतिषामादिः, ततयः ततज्ञानश्च । ज्योतिषामादिषु सूर्यादिषु गतः ॥

५६९. **सहिष्णुः–** द्वितीयं रूपम् । १४४तममाद्यम् । सहनवान् सही । चेष्टाबलात्मकत्वात् ष्णुः। स हि विष्णुरिति सहिष्णुः। सकलहित-करिष्णुः । सतां हिताय भूमौ भविष्णुः ॥

५७०. **गतिसत्तमः–** गम्येषु निर्दुष्टतमो गम्यः । सर्वेषां गतिश्च सत्तमश्चेति वा। ज्ञानानन्दरूपत्वाद् गतिः। सति मुख्यप्राणे तत इति मेयः सत्तमः ॥ ७३ ॥

**सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।**
**दिवस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ७४ ॥**

५७१. **सुधन्वा–** शोभनं शार्ङ्गं धनुरस्य। धन्वा मरुरपि येन शोभनो भवति यदनुग्रहेण सस्यमयः स सुधन्वा ॥



५७२. **खण्डपरशुः–** शत्रुखण्डनात् खण्डोऽस्य परशुः। खण्डनात् खण्डश्च परसुखत्वात् परशुश्च । अखण्डपरशुर्वा ॥

५७३. **दारुणः–**दुष्टानां दारुणः । दारूण्यपि नयति । दाता चारुणवर्णः । दानवानयं रुणद्धि। वर्णव्यत्ययेन दैत्यान् दारयतीति च दारुणः ॥

५७४. **द्रविणप्रदः–** द्रविणं काञ्चनं धनं वा । प्रददाति केषाञ्चित्, प्रद्यति केषाञ्चित्। अथच द्रविणं पराक्रमो बलं वा। तदपि यथायोग्यं ददाति द्यति च ॥

५७५. **दिवस्पृक्–** दिवं स्पृशन् दिवस्पृक् । दिवमिति क्लीबं स्वर्गवाचि गगनवाचि च। 'द्यौः स्त्री स्वर्गे च गगने दिवं क्लीबं तयोः स्मृतम्' इत्यभिदधति। कालनियामकतया दिवसस्पृक्। दिविस्पृगिति केषाञ्चित् पाठः ॥

५७६. **सर्वदृग्व्यासः–** सर्वेषां दृशः ज्ञानानि चक्षूंषि वा व्यस्यति विभजति तत्तद्योग्यतयेति सर्वदृग्व्यासः। सर्वाभिर्दृग्भिः ज्ञानैः पूर्णतया विशिष्ट आसेति सर्वदृग्व्यासः। सर्वमपि साक्षात् पश्यन् सर्वदृक्। व्यस्यति तत्तद्योग्यतया कर्माणि ज्ञानानि च ॥

५७७. **वाचस्पतिः–** द्वितीयं रूपम्। २१७तमं प्रथमम्। सर्वस्या अपि वाचः पतिरयम् । सर्वविद्यावेद्यत्वात् । सर्वा वाचः पाति च ॥

५७८. **अयोनिजः–** न योनौ जायते। अयोनावपि जायते। नास्य योनिः कारणं किञ्चित् । अथापि स्वेच्छया जायते । अयोऽपि निजं प्रतीकमस्य। अकारवाच्यः स्वेच्छया योनिजोऽपि भवति ॥ ७४ ॥

**त्रिसामा सामगः साम निर्बाणं भेषजं भिषक् ।**
**सन्न्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥ ७५ ॥**

५७९. **त्रिसामा–** त्रिष्वपि वेदेषु समं स्तूयत इति त्रिसामा । त्रिभिर्वेदैः सामयन्ति सान्त्वयन्त्येनम् । त्रिभिर्यज्ञदानतपोभिः, यज्ञाध्ययनदानैर्वा धर्मस्कन्धैः सान्त्वयन्त्येनम् ॥

५८०. **सामगः–**सामभिर्गीयत इति सामगः । वाच्यत्वेन सामानि गच्छति । सामगायनेषु गतः स्वयं साम गायति । आदौ ब्रह्मणे साम गमयति ॥

५८१. **साम–** सर्वरूपेषु समान इति सामः । सारभूता सा रमा । तया सहितोऽयममितः साम । सामगतश्च सामनामा ॥

५८२. **निर्बाणम्–**भौतिकदेहरहितं निर्बाणम् । देहमूलदुःखबन्धनरहितं च ॥

५८३. **भेषजम्–** भेषजगतः तन्नामा । भवरोगस्य भेषजं च । भानि नक्षत्राणि इष्यतीति भेषः तारापतिश्चन्द्रः । इष इच्छायाम् । तत्रायमभिव्यज्यते ॥

५८४. **भिषक्–** भिषग्गतः भिषङ्नामा । अविद्यारुजः भिषक्तमश्चायम् ॥

५८५. **सन्न्यासकृत्–**सन्न्यासं केषाञ्चित् सफलं करोति, केषाञ्चित् कृन्तति । स्वयं च सनत्कुमारादिरूपेषु सन्न्यासधर्ममाचरन् दर्शयति ॥

५८६. **शमः–** शमगतः शमनामा । शमयति दोषानिति शमः । आनन्दरूपत्वाच्छमः । आनन्दज्ञानरूपत्वाद् वा । ज्ञानिनां शर्म निर्माति असतां नाशयति च । 'मानं ज्ञानं लयश्चैव' इति स्मरणात् ॥

५८७. **शान्तः–** आनन्दस्य परा काष्ठा । असङ्गतया च शान्तः ॥

५८८. **निष्ठा–** सर्वेषां च परा निष्ठा । चरमा स्थितिः । प्रळये च यदुदरे सर्वं निलीय तिष्ठति ॥

५८९. **शान्तिः–** शमित्यानन्दः । इकारो ज्ञानवचनः । तेन शान्तिरिति ज्ञानानन्दयोः परा काष्ठा । संसारविरतिहेतुत्वाच्च शान्तिः ॥



५९०. **परायणम्–** परं तदयनम् । परेषामप्ययनम् । परं चेदं शुभावहं प्रति नयति च । परं आयं च प्रणयति । परायणो वा । त्रिलिङ्गो ह्ययनशब्दः ॥ ७५ ॥

**शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।**
**गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ७६ ॥**

५९१. **शुभाङ्गः–** शुभाः ब्रह्मादयः । परिवारतया सृष्ट्यादिकर्मण्यङ्गान्यस्य । शुभकराण्यङ्गान्यस्य । अधिकमुपरि (७८६) ॥

५९२. **शान्तिदः–** शान्तिं मोक्षं ददत् शान्तिदः । भगवन्निष्ठां वा ददत् ॥

५९३. **स्रष्टा–** सर्वस्य जगतः स्रष्टा । स्वयमेव स्वेच्छया स्वस्रष्टा । अधिकमुपरि (९९०) ।

५९४. **कुमुदः–** कुं भूमिं मोदयन्, कौ मोदमानो वा कुमुदः । भूमेः मुदं ददद् वा । अधिकमुपरि (८११) ॥

५९५. **कुवलेशयः–** कौ वलत इति कुवलं जलं तत्र शेते नारायणः । कौ वलते सर्पतीति कुवलः पादोदरः । शेष इत्येतत् । तत्र शेते अनन्तशयनः । कुवलानि जीवजातानि तेषां हृदयकुहरे शेते । कुवला भूचारिणो मनुष्याः । तेषामीशा ब्रह्मादयः । तानपि यमयत्ययम् ॥

५९६. **गोहितः–** गोः भूमेः स्वर्गस्य च हितः । गवां धेनूनां हितः । गोषु वेदेषु ज्ञानेषु च निहितः ॥

५९७. **गोपतिः–** द्वितीयं रूपम् । ४९७तमं प्रथमम् । गस्य गणपतेः ओः शम्भोश्च पतिः । गोपकुलं तनोति विस्तारयति । गौर्भारती । तां पातीति गोपो वायुस्तं विस्तारयति । तस्य तिरानन्दोऽनेनेति वा । गोपा वेदपालका ज्ञानिनः । तेषु ततिरस्य, तेषां तिरानन्दश्चानेन ॥

५९८. **गोप्ता–** इदमपि द्वितीयम् । ४९८तमं प्रथमम् । गवां गोप्ता । वेदानां गोप्ता । स्वर्गादेर्गोप्ता । सर्वगः । वप्ता च ज्ञानबीजस्य । आदन्तायां सर्वगता सतां मनसि गुप्ता चोप्ता चेयं परदेवता ॥

५९९. **वृषभाक्षः–** वृषभे धर्मे अक्ष्यस्येति । वृषेण धर्मेण भान्ति ये ते वृषभा धर्मनिष्ठाः । तेषु व्याप्नोति । तान् वा न क्षपयति । वृषो भासमाना-क्षश्च । वृषे भातीति वृषभ शिवः । तमक्ष्णोति ॥

६००. **वृषप्रियः–** धर्मप्रियत्वात् वृषप्रियः । अभीष्टवर्षणाद् वृषश्च । भक्त-प्रियश्च । वृतषड्गुणश्च प्रिययज्ञश्च ॥ ७६ ॥

**॥ इति नाम्नां षष्ठं शतकम् ॥**

**अनिवर्त्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः ।**
**श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः ॥ ७७ ॥**

६०१. **अनिवर्त्ती–** जगद्व्यापारात् कदाऽपि न निवर्तते । अनिनः जीवान् वर्तयति । अनः प्राणस्तद्वान्, सर्वं प्रवर्तयति च ॥

६०२. **निवृत्तात्मा–** द्वितीयं रूपम् । २३०तमं प्रथमम् । अथापि निर्लिप्त-तया सदाऽपि निवृत्तश्चायमात्मा । येन च जीवात्मानः निवृत्तिकर्म-निरताः । निवृत्तानामात्मा स्वामी चायम् । नीचं वृत्तं वर्तनं ये ते निवृत्ताः । तानत्ति नाशयतीति निवृत्तात्मा । नितान्तं वृत्तं येषां ते साधवो निवृत्ताः । तानादत्त इति निवृत्तात्मा ॥

६०३. **सङ्क्षेप्ता–**अवताररूपाणां मूलरूपे सङ्क्षेप्ता । प्रळये जगतां च सङ्क्षेप्ता । सं च क्षेप्ता च ॥

६०४. **क्षेमकृच्छिवः–**क्षेमकृतां शिवः मङ्गलस्वरूपः । केषाञ्चित् क्षेमं कृन्तन्, केषाञ्चित् योगक्षेमं वहन् शिवो भवति । क्षेमकृच्चायं शिवश्च ॥



६०५. **श्रीवत्सवक्षाः–** श्रीवत्साङ्कं वक्षोऽस्येति श्रीवत्सवक्षाः । श्रीः वत्सो ब्रह्मा च कौस्तुभरूपेण वक्षसि यस्य । श्रियो वत्सो वा यस्य वक्षसि ॥

६०६. **श्रीवासः–** श्रीः वसत्यत्रेति श्रीवासः । श्रियां वेदानां वा वासः । सर्वसम्पदां निवासः । 'चक्षुः श्रोत्रं मनो वाक् प्राणः' इत्युक्तासु श्रीषु वसत्ययम् ॥

६०७. **श्रीपतिः–** श्रियः पतिरयमिति श्रीपतिः । वेदपतिर्लक्ष्मीपतिः ॥

६०८. **श्रीमतांवरः–** श्रीमतां कान्तिजुषां वेदज्ञानां वा ब्रह्मादीनां वरोऽय-मिति श्रीमतांवरः । श्रियो मतं सम्मतं प्रियमित्येतत्, अम्बरं पीताम्बरं यस्य ॥ ७७ ॥

**श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।**
**श्रीधरः श्रीकरः श्रेयः श्रीमान् लोकत्रयाश्रयः ॥ ७८ ॥**

६०९. **श्रीदः–** श्रियं सम्पदं ज्ञानं वेदान् वा ददातीति श्रीदः । असतां श्रियं द्यन्नपि श्रीदः । श्रिये सर्वदा सर्वदः ॥

६१०. **श्रीशः–** श्रियोऽपीष्टे । श्रियामपीशः । श्रियः शमनेन भवति ॥

६११. **श्रीनिवासः–**द्वितीयं रूपम् । १८३तममाद्यम् । श्रियो नित्यवास इति श्रीनिवासः । श्रियं सम्पदादिरूपां निवासयति च जीवेषु यथार्हम् ॥

६१२. **श्रीनिधिः–** श्रियो निधिः । सम्पदादिमयी श्रीरनेन निधीयते च । भक्तानां श्रीश्चायं निधिश्चायम् ॥

६१३. **श्रीविभावनः–** श्रियं यथार्हं विविधजीवेषु विविधं भावयति । श्रिया विशिष्टतया विलक्षणतया विविधं च भाव्यते । श्रियो विशिष्टं भं ज्ञानमानन्दम्, विभां विशिष्टां कान्तिं वा सदाऽवति । लोकस्य श्रियं विभां चावति । श्रिये विभायै लोकैर्वन्यते ॥

६१४. **श्रीधरः–** श्रियं धरन् श्रीधरः । ये च वेदादिरूपां श्रियं दधति तान् रमयन्नयं श्रीधरः । श्रीश्च धरश्चायम् ॥

६१५. **श्रीकरः–** सतां श्रियं कुर्वन् श्रीकरः । श्रीः करेऽस्येति च श्रीकरः ॥

६१६. **श्रेयः–** सर्वलोकहितत्वाच्छ्रेयः । वेदमार्गं श्रावयन्तीति श्राः । तैरीयते सारतयेति श्रेयः । श्रे शरे तदग्रे अय इव शत्रुभीषणं ब्रह्म । अयसि सन्निहितं च ॥

६१७. **श्रीमान्–**चतुर्थं रूपम् । **२२१**तमं तृतीयम् । **१७८**तमं द्वितीयम् । द्वाविंशं प्रथमम् । श्रीरस्यास्ति । श्रियश्च सर्वा अस्य सन्ति । तेन श्रीमान् । श्रियः स्वरूपेन्द्रियाण्यस्य सन्ति । श्रियं मानयति । अङ्कस्थया श्रिया वक्षःस्थया मया चानिति । श्रिया रुग्मिण्या मया सत्यभामया च । श्रीमाभ्यां लक्ष्मीधराभ्यामाश्लिष्टः क्रीडति । जीवानां शं रं मां च नयति ॥

६१८. **लोकत्रयाश्रयः–** लोकत्रयस्याऽश्रयः । त्रिविधजीवानामाश्रयत्वाच्च लोकत्रयाश्रयः । लोकत्रयं चायं लीलया श्रयते ॥ ७८ ॥

**स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।**
**विजितात्मा विधेयात्मा सत्कीर्त्तिश्छिन्नसंशयः ॥ ७९ ॥**

६१९. **स्वक्षः–** सुमेदुरनयनः । सुखमयनयनः । अक्षि नयनम् । अक्षाणि देहेन्द्रियाणि । सुखरूपः न क्षीयते च ॥

६२०. **स्वङ्गः–** सुन्दराङ्गः । सुखमयसर्वावयवः । स्वं गमयति भक्तानाम् ॥

६२१. **शतानन्दः–** शतानन्दान्तर्यामी तन्नामा । अनन्तानन्दश्च शतानन्दः ॥

६२२. **नन्दिः–** आनन्दरूपत्वात् नन्दिः । नन्दिगतस्तन्नामा ॥

६२३. **ज्योतिर्गणेश्वरः–** ज्योतिर्गणस्य सूर्यचन्द्रादेरयमीश्वरः । ज्योतिर्गणेशानामपि वरः । ज्योतिषां ज्योतिरयं गणेश्वरश्च । ये ज्योतींषि



गणयन्ति गणकास्तेषामयमीश्वरः । ज्योतिर्भ्यः सूर्यचन्द्रादिभ्यः तदधिष्ठानस्याऽकाशस्याभिमानिनः गणेशादपि वरः । ज्योतिर्गानां ज्योतिर्विदां णः निर्वृतिर्यस्मात् स ज्योतिर्गणः । ईश्वरश्च सर्वेषाम् । ज्योतिषु गच्छति सन्निहितो भवति । ण आनन्दबलरूपश्चेश्वरश्च ॥

६२४. **विजितात्मा–**विजिताः सर्वे जीवात्मानोऽनेन । आत्मा चतुर्मुखश्च । भक्तैर्विजितश्चायमात्मा स्वामी च । न केनापि जित इति च विजितः । आत्मा सर्वात्ता ॥

६२५. **विधेयात्मा (अविधेयात्मा)–** अत एव विधेयाश्च तेऽस्य । विधेयश्चतुर्मुखश्चास्येति । ज्ञानिभिर्हृदि विधेयात्मा । स्वयं न कस्यापि विधेय इति अविधेयात्मा वा ॥

६२६. **सत्कीर्त्तिः–** सती कीर्तिरस्य । सतां कीर्तिरनेन । सन्तः कीर्तयन्त्येनम् । सतः प्राणस्यापि कीर्तिरनेन । सता प्राणेन कीर्त्यते च । निर्दोषत्वात् सत् । कीर्त्यत इति कीर्तिः ॥

६२७. **छिन्नसंशयः–** छिन्नाः संशया अस्य । अन्येषां च छिन्ना अनेन । छिन्ने सति संसारे ये मुक्तास्तेषु सम्यक् शेते । छिन्नसंशयेषु ज्ञानिषु गतश्चायम् ॥ ७९ ॥

**उदीर्ण्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।**
**भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ८० ॥**

६२८. **उदीर्ण्णः–** उद्रिक्तगुणत्वात् उदीर्णः । उत्कृष्टमीरमपि नयति । तस्यापि णः सुखं बलं चानेन । उदीर्ण उद्गतः सर्वदोषेभ्यः ॥

६२९. **सर्वतश्चक्षुः–** विश्वतश्चक्षुः । सर्वत्र ततः सन् सर्वं चष्टे । वनस्पतिरिति यथा ॥

६३०. **अनीशः–** नास्त्यस्य कश्चिदीश इति अनीशः । अनिनां चेशः । अनस्यायमीशः । अश्चायं नितरामीष्टे चायमिति नीशः । स चासौ सचेति अनीशः । अनस्वामित्वादनी चायम् । या लक्ष्म्या ईशश्च ॥

६३१. **शाश्वतस्थिरः–** शश्वद् भवन् शाश्वतः । एकप्रकारत्वात् स्थिरश्चेति शाश्वतस्थिरः । शाश्वतेषु च स्थिरः । आनन्दरूपाः अश्वे भगवति ताश्चेति शाश्वता मुक्ताः । तेषु स्थितः रमते रमयति च तान् ॥

६३२. **भूशयः–** भुवि शेते व्याप्नोति । ये भुवि शेरते तानपि याति । भूरिति सत्ता । शमित्यानन्दः । यमिति ज्ञानम् । तेन भूशय इति सच्चिदा-नन्दः । भुवः शं यैस्ते भूशाः सन्तः । तान् यमयन् याति । भूशयेषु सरीसृपादिषु सन्निहितः । भूरूपया रमया सह शेते । भुवः शं यं चानेन ॥

६३३. **भूषणः–** परमसुन्दरत्वात् भूषणानामपि भूषणभूतः । स्वसन्निधानेन सर्वं भूषयतीति भूषणः । भुवं सनोतीति च भूषणः । ये च भुवो भूषायिताः तानयं नयति । ये च भुवं स्यन्ति असुरास्तानयमपन-यति । स्वयं चान्ते भुवं स्यति । णश्चायमानन्दरूपश्च । भुवः चेष्टा चाऽनन्दश्चानेन ॥

६३४. **भूतिः–** भूतिः महालक्ष्मीः । तस्या अन्तर्यामी तन्नामा । परमानन्द-त्वात् भूतिः । उन्नतेश्च परा काष्ठा भूतिः । भुवः ऊती रक्षाऽनेन, अनया वा परदेवतया ॥

६३५. **विशोकः–** विगतशोकः । मुक्ताश्च विगतशोका अनेन । विशिष्टानन्दत्वाद् विशः । ऊकश्च रक्षिता च । विशानां मुक्तानामूकः । विविधाश्च शोका अनेन भवन्ति । 'अशोकः' इत्येके ॥

६३६. **शोकनाशनः–** अन्येषामपि शोकं नाशयति । ये च सतां शोकं नयन्ति प्रापयन्ति तानयमश्नाति । ये च सतां शोकं नाशयन्ति । तानयं स्वसमीपं नयति ॥ ८० ॥



**अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।**
**अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ८१ ॥**

६३७. **अर्चिष्मान्–** अनन्तान्यर्चींष्यस्येति अर्चिष्मान् । अर्चिषि या मा कान्तिः तत्रायं ज्वलन्ननिति । जलेऽनितीति जलानिति यथा । अर्चिष्मत्सु गतश्च ॥

६३८. **अर्चितः–** अर्चितः सर्वैः । अरं गुणैश्चितः । अश्च ऋचि ततश्च । केनाप्यरचितत्वाच्चार्चितः ॥

६३९. **कुम्भः–** कौ भूमौ भवत्यवतरतीति कुम्भः । बिन्दुरवधारणे । कुश्च भवत्यनेन । कुं भासयति । कुत्सितं जनं भाति विदारयतीति कुम्भः । भ विदारणे । कुम्भेषु गतश्च । कुं भूमिं दारयति च ॥

६४०. **विशुद्धात्मा–** विशुद्धः अयमात्मा । विशुद्धा अनेनाऽत्मानः । विशुद्धानां चायमात्मा स्वामीति विशुद्धात्मा । विशुद्धानादत्ते । अशुद्धानत्ति च । विश्च शुद्धश्च आत्मा च ॥

६४१. **विशोधनः–** सर्वं विशोधयतीति विशोधनः । नास्त्यस्य कश्चित् शोधनः । विशानां विशिष्टसुखानां उच्चं ज्ञानधनमनेन ॥

६४२. **अनिरुद्धः–** द्वितीयं रूपम् । १८५तमं प्रथमम् । अनिरुद्धान्तर्यामी तन्नामा । न विद्यत इः कामोऽस्येति अनिर्जितकामः । रुतान् सर्वशब्दान् धत्ते । अनिभिर्जितकामैर्हृदि रुद्धः ॥

६४३. **अप्रतिरथः–** अनेनानिरुद्धोऽप्रतिरथो जातः । स्वयं चास्य नास्ति प्रतियोद्धेति अप्रतिरथः । अप्रतिमत्वादप्रतिः । 'श्रीपतिरप्रतिः' इति भगवत्पादवचनम् । रमणाद्रथश्च । रमित्यग्निः । तत्र स्थितश्च रथः । रमणीयेषु स्थितश्च ॥

६४४. **प्रद्युम्नः–**प्रकृष्टमस्य द्युम्नं जगदाख्यं द्रविणं ज्ञानं बलं वेति प्रद्युम्नः । प्रद्युम्नान्तर्यामी तन्नामा ॥

**६४५. अमितविक्रमः–** द्वितीयं रूपम् । ५१८तमं प्रथमम् । प्रद्युम्नश्चानेनामितविक्रमो बभूव । अमिताश्च विक्रमाः पराक्रमा पादविक्षेपा वा अस्येति अमितविक्रमः । अमितश्चायं विना गरुडेन क्रमते चेति अमितविक्रमः । अ इति मीयत इति न मीयत इति वा अमी । तत-विक्रमश्च । नाशाभावादमिषु मुक्तेषु ततः विशिष्टः भक्तरक्षाक्रमोऽ-स्य । अमितवेगेन गरुडेन क्रमते च ॥ ८१ ॥

**कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः ।**
**त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ८२ ॥**

**६४६. कालनेमिनिहा–** कालनेमिं निहतवानिति कालनेमिहा । कालस्य नेमिं प्रधिं चक्रं वा नयन् हन्ति गच्छति, हन्ति नाशयति वा सर्वमिति । काल इति दुर्गा ब्रह्मा वायू रुद्रो यमो वा । तान् नयति नियमय-तीति कालनेमिस्तेषामन्तर्यामी भगवान् । तेषु च स्थितः सन् जग-न्निहन्ति । अन्ते कालानपि ब्रह्मवाय्वादीन् निहन्ति । 'नियो मिः' । कालश्चायं जगन्नयतीति नेमिश्चायं निहन्ता चायम् । कालं कालनं संहारं नयतीति कालनेमो यमः । सोऽस्यास्ति नियम्य इति कालनेमी शिवः । कालनेमिनि स्थित्वा निहन्ता जगतः ॥

**६४७. वीरः–** द्वितीयं रूपम् । ४०२तमं प्रथमम् । ६६२तमं तृतीयम् । वीन् ज्ञानिन ईरयति । वीनामिच्छा रमणं चानेन । विशिष्टा चेच्छा विशिष्टं च रमणमस्य । स्वयं विगतान्यप्रेरकः ॥

**६४८. शौरिः–** द्वितीयं रूपम् । ३४१तमं प्रथमम् । शूरसुतान्तर्गतः तन्नामा । शूराणामयं सर्वेषां बलद इति शौरिः । सुखवान् शुरुच्यते । शौ मुक्ते रमत इति शौरिः । शौ शतानन्दे रमते च ॥

**६४९. शूरजनेश्वरः–**अत एव शूरजनानां सर्वेषामीश्वर इति शूरजनेश्वरः । शूरश्चासौ जनेश्वरश्च वा । सर्वं जनयतीति, न जायत इति वाजनश्च,



ईश्वरश्च वा । शूरजनेशानामयं वरः । शूरेषु जायते अभिव्यज्यते । नान्य ईश्वरश्चास्येति नेश्वरः । शवन्ति सङ्ग्राममिति शूरा योद्धारः क्षत्रियाः । तान् जनयत्ययमीश्वरः ॥

**६५०. त्रिलोकात्मा–** त्रयाणामपि लोकानामात्मा अन्तर्यामी स्वामी चेति त्रिलोकात्मा । त्रीनपि लोकानन्तेऽत्तीति च त्रिलोकात्मा । आप्नोति, व्याप्नोतीति वा । त्रिष्वपि लोकेष्वस्याऽत्मानो रूपाणि ॥

**६५१. त्रिलोकेशः–** त्रयाणामपि लोकानामीष्टे । त्रिभी रूपैर्विश्वादिभि-र्लोकानामीष्टे । त्रीणि अविद्याकामकर्माणि लोपयन्नयं कस्य सुखस्य ब्रह्मणो वा कानामिन्द्रियाणां वेशः । त्रिलोकेऽपि शमनेन । अशं दुःखं चानेन । लोक्यन्त इति लोका जाग्रदाद्याः । तेषां चेष्टे ॥

**६५२. केशवः–** द्वितीयं रूपम् । त्रयोविंशं प्रथमम् । के जले शेते वाति च सर्वत्र । के चतुर्मुखे वायौ शं वं चानेन । कानामिन्द्रियाणामीशः, वः ज्ञानरूपश्च । केन मनसा इच्छा सुखं ज्ञानं च जीवानामनेन । केशैः केसरैर्वीयत इति केशवो नृसिंहात्मा ॥

**६५३. केशिहा–** कृष्णरूपेण केशिनं हतवानिति केशिहा । केशिनं वायुं गतवानिति च केशिहा । तमप्यन्ते हन्ति । केशवन्तः गभस्तिमन्तः केशिनः । सूर्याद्याः । तान् गतवानिति केशिहा । हतवानिति वा । केशौ ब्रह्मरुद्रौ पुत्रत्वेन पौत्रत्वेन चास्य स्त इति केशी । जिहीते सर्वत्र गच्छति । ओ हाङ् गतौ । जहाति त्यजति दोषान् । ओ हाक् त्यागे । जुहोति इन्द्रियाग्निषु विषयांश्चेति केशिहा । केशौ ब्रह्मरुद्रौ स्रष्टृत्वेन संहर्तृत्वेन चास्य स्त इति केशि विश्वम्, ताभ्यां सहैव हन्ति संहरतीति केशिहा । केशी केसरी भूत्वा हिरण्यकशिपुं हतवानिति केशिहा ॥

**६५४. हरिः–** शत्रून् हरति, यज्ञभागमाहरति, संसारं परिहरति, वर्णतश्च हरित इति हरिः । शिशुपालस्य शिरो जिहर्तीति हरिः । हृ प्रसह्य

करणे । शाखामृगगतस्तं हरिपदवाच्यं चकार । शक्रगतस्तम् । सिंहगतस्तम् । दर्दुरगतस्तम् । वाजिगतस्तम् । अनिलगतस्तम् । चन्द्रार्कगतस्तौ । शुकगतस्तम् । यमगतस्तम् । 'यमानिलेन्द्रचन्द्रार्ककूप-मण्डूकवाजिषु । शुककेशवसिंहाश्ववर्णादिषु हरिं स्मरेत्' इति स्मृति-वचनमनेन व्याख्यातम् ॥ ८२ ॥

**कामदेवः कामपालः कामी कान्तः कृतागमः ।**
**अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ८३ ॥**

६५५. **कामदेवः–** कामदेवे गतः कामदेवः । कमनीयो देवः । काम्यते देवैरपीति कामदेवः । इच्छारूपश्चायं देवः । कामः अमितानन्दः । देवः प्रकाशरूपश्च । दानाच्चावनाच्च वा देवः ॥

६५६. **कामपालः–** कामं, कामान् वा पालयति, कामपान् वा लातीति कामपालः । कामश्च पालश्च ॥

६५७. **कामी–** कामस्वामी कामी । सत्या अस्य कामा इति कामी । कामोऽस्ति पुत्रत्वेनास्येति कामजनकः कामी । अमितानन्दश्च । काभ्यां ब्रह्मवायुभ्यामपि न मीयते । कश्चामितश्च ॥

६५८. **कान्तः–**द्वितीयं रूपम् । **२९६**तमं प्रथमम् । कमनीयतमः कान्तः । कयोः ब्रह्मवाय्वोरप्यन्तकोऽयम् । असतां सुखस्यान्तकृच्च । सुखरूपत्वात् कश्च सर्वान्तकश्च । कस्याऽनन्दस्यान्तः परा काष्ठा ॥

६५९. **कृतागमः–** अनेन आविष्कृताः कृताः कारिताश्च सर्वेऽप्यागमा इति कृतागमः । कृतमेव आगमयति नाकृतम् । कृतं यज्ञादिकं प्रति देवानागमयति । मनसि चिरं कृतोऽपि न गम्यते न ज्ञायत इति कृतागमः । भगवता कृता या जगती तया न गम्यते च । जगती-मानिन्या चित्प्रकृत्याऽपि न सम्यग् गम्यते । कृतानि भूरादीनि, अगतान्याकाशादीनि च निर्माति । अधिकमुपरि (७९३) ॥



६६०. **अनिर्देश्यवपुः–** द्वितीयं रूपम् । **१७७**तमं प्रथमम् । इदमित्थमिति अनिरूप्यं वपुरस्येति अनिर्देश्यवपुः । अनिर्देश्यं वपुरेव च स्वय-मयम् । अनिर्देश्येन वेन ज्ञानेन नित्यपुष्टोऽयम् । अनिर्देश्यश्च वपुश्च वा । मुक्ता वा संसारिभिरनिर्देश्याः । तेषां वं पुष्णाति । अश्च सर्ववेदैर्निर्देश्यश्च ज्ञानरूपत्वाद् वश्च पूर्णत्वात् पुश्च ॥

६६१. **विष्णुः–** तृतीयं रूपम् । **२५९**तमं द्वितीयम् । द्वितीयमाद्यम् । विशति सर्वमिति विष्णुः । वेवेष्टि सर्वमिति विष्णुः । विशिष्टौ षणौ चेष्टाबलावस्येति विष्णुः । वेति सर्वत्र गच्छतीति विष्णुः । वेति त्रिभिः पदैरिति वा विष्णुः । वी गतौ । वेति कमनीयो भवतीति सत्यसङ्कल्पत्वाद् वा विष्णुः । वी कान्तौ । वेति प्रजनयति सर्वमिति च विष्णुः । वी प्रजने । वेति नाशयति सर्वमन्त इति विष्णुः । वी खादने । वेति प्रेरयति सर्वमिति विष्णुः । वी प्रेरणे ॥

६६२. **वीरः–** तृतीयं रूपम् । **६४७**तमं द्वितीयम् । **४०२**तममाद्यम् । वेतीति वीरः । विष्णुपदवदर्थो बोद्धव्यः । विशिष्टा इः इच्छा रतिश्चास्य । विशेषतः ईं लक्ष्मीं रमयति । अजति सङ्ग्राममिति वीर इति वैयाक-रणाः । विदुषामिष्टं रातीति वीरः । वीतरागो वीरः । वीररमणो वीरः । वीराणां वीर्यं राति च । वीरान् दारयन् वीरदारो वीरः । विना गरुडेन विभिर्विद्भिश्च इतः रमयति ॥

६६३. **अनन्तः–**कालतः देशतः गुणतः शक्तितश्चापरिच्छिन्नः अनन्तः । अनमपि तनोति । अने ततः । बिन्दुरवधारणे । अकारवाच्यो न भवतीत्यनो जीवः । तं तनोति । अधिकमुपरि (८८८) ॥

६६४. **धनञ्जयः–** येन धनमुभयं जयन्ति यश्च सर्वं जगदाख्यं धनं जयति, स धनञ्जयः । धनञ्जयगतश्च धनञ्जयः ॥ ८३ ॥

**ब्रह्मण्यो ब्रह्मकृद् ब्रह्मा ब्रह्म ब्रह्मविवर्द्धनः ।**
**ब्रह्मविद् ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ८४ ॥**

६६५. **ब्रह्मण्यः–** ब्रह्मणे वेदज्ञाय हितः ब्रह्मण्यः । चतुर्मुखाय हितः । ब्रह्मणा अण्यते । वेदैरण्यते च ॥

६६६. **ब्रह्मकृद्–** तं ब्रह्माणमपि करोतीति ब्रह्मकृत् । अन्ते कृन्तति । ब्रह्म वेदं व्यक्तं करोति । ब्रह्माणि जीवांश्च करोति ॥

६६७. **ब्रह्मा–** ब्रह्मान्तर्यामी तन्नामकः । गुणबृंहित इति ब्रह्मा । बृंहयतीति च ब्रह्मा । बृहती मा प्रमाऽस्य । मा च रमाऽस्य दयिता ॥

६६८. **ब्रह्म–** सर्वगुणबृंहितः स्त्रीपुन्दोषविहीन इति ब्रह्म । ब कामने । इच्छारूपत्वात्, रतिरूपत्वात्, हानात्, मानाच्च ब्रह्म ॥

६६९. **ब्रह्मविवर्द्धनः–** ब्रह्माणं सर्वेभ्यो देवेभ्यो विशिष्टतया वर्धयति । ब्रह्मणः वेदज्ञान् वा । ब्रह्म बृहत् ज्ञानं तपो वा । ब्रह्म शब्दराशिं वर्धयति वा । ब्रह्माणि जीवान् विविधं वर्धयति वा । प्रळये वर्धयति नाशयति च । ब्रह्म मुक्तगणं विशेषेण वर्धयति ॥

६७०. **ब्रह्मवित्–** ब्रह्म वेदं स्वयमेव केवलं वेत्तीति ब्रह्मवित् । 'वेदविदेव चाहम्' इति, 'इत्यस्या हृदयं साक्षान्नान्यो मद् वेद कश्चन' इति च स्मरन्ति । पूर्णं चास्य वेदनमिति ब्रह्मवित् । स्वयमेव च स्वात्मानं वेद । ब्रह्म वेदं वाच्यत्वेन विन्दतीति ब्रह्मवित् । ब्रह्म चित्प्रकृतिं भार्यां विन्दतीति ब्रह्मवित् । ब्रह्माणं पुत्रं विन्दतीति ब्रह्मवित् । ब्रह्मणि विद्यत इति ब्रह्मवित् । ब्रह्माणि जीवा विद्यन्त उत्पद्यन्तेऽनेनेति ब्रह्मवित् । ब्रह्म पूर्णसुखं विन्दतीति ब्रह्मवित् । मुक्ताः स्वयोग्यतानुगुणं पूर्ण-सुखं विन्दन्त्यनेन । जीवा ब्रह्म वेदं विदन्त्यनेन । परं प्रह्म च विदन्त्यनेनैव ॥

६७१. **ब्राह्मणः–** ब्रह्म वेदराशिं वाच्यतया अणति गच्छति ब्राह्मणः । चतुर्मुखं वा अन्तर्नियन्तुम् । ब्रह्मणोऽयं जनकः । ब्रह्मणां वेदज्ञानामयं प्रियः । ब्रह्माणि जीवाः । तेष्वयमन्तर्यामी । ब्रह्मणो वेदराशेरयं मुख्यप्रतिपाद्यः ॥



६७२. **ब्रह्मी–** ब्रह्मा वेदश्चतुर्मुखो वा, ब्रह्म ज्ञानं तपो वाऽस्त्यस्य नियम्यतयेति ब्रह्मी । ब्रह्मेति तेजोऽप्युच्यते । तेन ब्रह्मी तेजस्वी ॥

६७३. **ब्रह्मज्ञः–** ब्रह्म वेदार्थं जानन् ब्रह्मज्ञः । ब्रह्म च ज्ञश्च । ब्रह्माणि जीवान्, ब्रह्माणं च ज्ञपयन् ब्रह्मज्ञः ॥

६७४. **ब्राह्मणप्रियः–** ब्राह्मणानां च वेदविदुषामयं प्रियः । ते च तस्य प्रियाः । वेदेषु संहितावत् ब्राह्मणमपि प्रियं तस्य ॥ ८४ ॥

**महाक्रमो महाकर्म्मा महातेजा महोरगः ।**
**महाक्रतुर्म्महायज्वा महायज्ञो महाहविः ॥ ८५ ॥**

६७५. **महाक्रमः–** उरुक्रमः । सृष्टिसंहारादौ महांश्च क्रमोऽस्य । सद्भिः क्रियमाणं महमुत्सवं आ सम्यक् क्रमते । असतां महमाक्रमते । आक्रम्य च विफलयति ॥

६७६. **महाकर्म्मा–** महच्च सृष्ट्यादिकं कर्मास्येति महाकर्मा । यस्यकस्यापि महेषु उत्सवेषु अस्यैव आ समन्तात् पूजाख्यं कर्म । महान्ति च नः कर्माणि येन । कर्मेति जीव उच्यते । स च येन महान् भवति स महाकर्मा । अधिकमुपरि (७९१) ॥

६७७. **महातेजाः–** महच्च सूर्यादिभासकं तेजोऽस्येति महातेजाः । महान् सर्वानुत्सवान् आतेजयति च ॥

६७८. **महोरगः–** महानुरगः शय्या यस्य स महोरगः । महोरगेषु स्थितस्त-न्नामा । महनीयमुत्कृष्टं च रमणं गमनं ज्ञानं चास्येति महोरगः ॥

६७९. **महाक्रतुः–** महाक्रतुषु गतस्तन्नामा । महांश्चासौ क्रतुर्ज्ञानरूपः । महेष्वाक्रियते चायम् ॥

६८०. **महायज्वा–** महानयं स्वयं यजन्, यजमानेषु अन्तर्यामी भवन् महायज्वा । महतो यजान् यज्ञान् वाति । 'आयज्ञेतश्चायजेतः' इति हि स्मरन्ति । महश्चायं यजन्नपि न यजतीत्ययज्वा च ॥

६८१. **महायज्ञः–** महानयं यज्ञ इज्यत इति । यज्ञेषु गतश्चेति महायज्ञः । महेषु आ इज्यते च ॥

६८२. **महाहविः–** महान् पुनरयं हविष्षु गतः महाहविः । महानयमिति सर्वैर्मन्त्रैर्हूयते । हूयमानेषु च महानयम् । महेषु चायमाहूयते । महच्च हविरस्य सर्वं जगदन्ते । महश्च अहेयत्वात् अहश्च, प्रकाशरूपत्वाद् वा, विशतीति विश्च ॥ ८५ ॥

**स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।**
**पूर्णः पूरयिता पुण्यः पुण्यकीर्त्तिरनामयः ॥ ८६ ॥**

६८३. **स्तव्यः–** सर्वैरपि स्तव्यः । स्तवं याति । यज्ञेषु बस्तहव्योऽपि स्तव्यो भवति ॥

६८४. **स्तवप्रियः–** प्रियस्तवोऽयं स्तोतॄन् न जहातीति स्तवप्रियः । स्तवगतः प्रियश्च । स्तवो वेदरूपः प्रियोऽस्य ॥

६८५. **स्तोत्रम्–** स्तोत्रगतः स्तोत्रनामा । येन स्तूयते तदपि स्तोत्रम् । यत् स्तूयते तदपि स्तोत्रम् । सर्वैर्वेदैरयं स्वात्मानमेव स्तौतीति स्तोतृत्वाद्वा स्तोत्रम् । श्रोतृत्वाद् श्रोत्रमिति यथा । स्तोतारं त्रायत इति स्तोतृत्रमेव स्तोत्रम् । स्तोमत्राणाद् वा स्तोत्रम् । स्तौति स्तूयते वा स्तोमः । ष्टुञ् स्तुतौ । 'मन्त्रस्तवः' इति दशपादिकावृत्तिः ॥

६८६. **स्तुतिः–** स्तुतिक्रियागतत्वात् स्तुतिः । स्तुतावादित आऽन्तं ततत्वाद् वा स्तुतिः । वेदैः स्तुतेस्तिरानन्दोऽस्य । 'स्तुतः' इति केचित् ॥

६८७. **स्तोता–** स्तोतरि गतोऽयमिति स्तोता । स्तोत्रेण तारयतीति च स्तोता । स्तोमेन वा तारयति ॥

६८८. **रणप्रियः–** स्तुतिगतः रणः शब्दः प्रियोऽस्येति रणप्रियः । देवारिभिः साकं युद्धप्रियश्च । रण्यत इति रणः प्रियश्च । रत्या बलेन आनन्देन वा प्रियः ॥



६८९. **पूर्णः–** गुणपूर्णत्वात् भक्तेषु गुणपूरणाच्च पूर्णः । भक्तान् वैकुण्ठपुरं नयति । भक्तैः हृदयाख्ये पुरि प्रणीयते ॥

६९०. **पूरयिता–** पूरयति कर्मणा ज्ञानेन च तत्तद्योग्यानिति पूरयिता । पूतः, भक्तरक्षणे रयवान्, तारयिता च । अधिकमुपरि (९२६) ॥

६९१. **पुण्यः–** पूतत्वात् पुण्यः । परमसुंदरत्वात् पुण्यः । 'पूतसुन्दरयोः पुण्यम्' इत्यभिधानम् । स्वतः पुनातीति पुण्यः । पुण्यं धर्मः । तन्नियामकः पुण्यः । अधिकमुपरि (९२६) ॥

६९२. **पुण्यकीर्त्तिः–** पुण्या कीर्तिरस्य । पुण्यकरं कीर्तनमस्य । पुण्याश्च कीर्तयन्त्येनमिति पुण्यकीर्तिः । पुण्यश्च कीर्तितश्च ॥

६९३. **अनामयः–** आमयादिदोषरहितः । अनस्य अमं अज्ञानं यापयति नाशयतीति च अनामयः । अनामानः अनाख्याता देवाः । तेषां यन्तेति च । अनामा च यनामा च । 'अकयप्रविसंभूमसखहाः' इत्यादिस्मरणात् । अनामभिरप्राकृतनामभिर्यान्त्येनम् ॥ ८६ ॥

**मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।**
**वसुप्रदो वारुदेवो वसुर्वसुमना हविः ॥ ८७ ॥**

६९४. **मनोजवः–**मनसोऽपि जवीयानिति मनोजवः । मनोऽप्यनेनैव जवते । मनोमानिनोऽपि अनेन जवन्ते । मनोजं वर्तयति । मननान्मनश्च । जवनाज्जवश्च । मन इति शिवमजं च वर्तयति । मनोजवे मारुते हनूमति वा गतः । मनांस्यजवानि चानेनैव ॥

६९५. **तीर्थकरः–**तीर्थानि गङ्गादीनि, शास्त्राणि च गीतादीनि करोतीति तीर्थकरः । सर्वं स्वसन्निधानेन तीर्थं पवित्रं करोति च । तरत्यनेन पापानीति स्वयं तीर्थरूपः सर्वकारणं च । तीर्थकेषु तीर्थजलेषु रमते । सर्वाणि तीर्थान्यस्य करे वशे ॥

६९६. **वसुरेताः–** हैममण्डं अस्य रेत इति वसुरेताः । वसवो देवा अपि अस्य औरसा इति वसुरेताः । वसूनां रेतो रतिश्चानेनैव । वसु हिरण्यं रेतोऽस्य इति च । वरसुखत्वाद् वसुः । रतिरूपत्वाद् रेताः ॥

६९७. **वसुप्रदः–** उभयविधं वसु चायं सतां प्रददाति । असतां प्रखण्डयति च । वसौ अग्नौ अस्य हविः प्रदीयते ॥

६९८. **वसुप्रदः–** तन्नामकं द्वितीयं रूपम् । वसूनां देवानां सर्वाभीष्टप्रदश्च वसुप्रदः । सर्वत्र वसतीति वसुरयं प्रकर्षेण ददाति प्रकृष्टं वा ददातीति प्रदश्चायम् । वसु प्रांतीति वसुप्राः । ज्ञानिनः । तानयं ददाति ॥

६९९. **वासुदेवः–**द्वितीयं रूपम् । ३३३तमं प्रथमम् । ७१३तमं तृतीयम् । वासुश्च देवश्चायम् । ज्ञानाद् वः । प्रेरणादसुः । दातृत्वाद् दे । अवनादवश्चेति वासुदेवः । दातृत्वाद् दः । इच्छागतेरिवो वा ॥

७००. **वसुः–** तृतीयं रूपम् । २७१तमं द्वितीयम् । १०४तमं प्रथमम् । वसति सर्वत्रायम्, सर्वं चात्राऽश्रयभूते इति वसुः । वसुषु द्रोणादिषु गतः । वसुप्रधानेऽग्नौ गतः । वस्ते मायया वस्यते चायम् । वस आच्छादने ॥

**॥ इति नाम्नां सप्तमं शतकम् ॥**

७०१. **वसुमनाः–** द्वितीयं रूपम् । १०५तमं प्रथमम् । सर्वविषयीकारि मनोऽस्येति वसुमनाः । वसुरूपं सात्विकं मनो यद्विषयीकारि स वसुमनाः । वरसुखत्वाद् वसुः । मननान्मनाश्च । वसुपुत्र्यां व्यासात्मना जातः सन् वसुं मानयन् वसुमनाः ॥

७०२. **हविः–** हविष्षु गतः हविः । हूयते, आहूयते चेति च हविः । हश्च विश्च ॥ ८७ ॥

**सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।**
**शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ८८ ॥**



७०३. **सद्गतिः–** सतां गतिरयम् । सती च गतिः । सच्च गतिश्चायमिति सद्गतिः । सतां गतिरवगतिर्मोक्षगतिश्चानेन । सतां गं ज्ञानं तिः आनन्दश्चानेन ॥

७०४. **सत्कृतिः–** द्वितीयं रूपम् । **२४३**तमं प्रथमम् । सतः प्राणस्य कृतिरनेनेति सत्कृतिः । सर्वैः सत्क्रियत इति सत्कृतिः ॥

७०५. **सत्ता–** निर्दोषस्वरूपत्वात् सत्तामात्रमिति सत्ता । सतस्तनोतीति च सत्ता । सत्सु तता परदेवता ॥

७०६. **सद्भूतिः–**सतां भूतिरनेन । सती च भूतिरयम् । भूतिश्च सती अनेन । सतां भूः आनन्दश्च ऊतिश्च रक्षा चानेन । भुव आनन्दस्य ऊती रक्षा वा । भूः सत्ता च ऊतिश्च वा ॥

७०७. **सत्परायणः–** सतां परायणः । सत्पराणामयनः, सन् परायणश्चेति सत्परायणः । सत्परः अयनश्च वा । सन्नयं परश्च अयनश्च । सतः पातीति सत्पः । सत् शुभमेव पिबतीति च सत्पः । रमायणः क्रीडायनो वा रायणः । रायं सम्पदं आणयति गमयतीति वा रायणः ॥

७०८. **शूरसेनः–** शूरसेनगतस्तन्नामा । शूरा च दैवी सेनाऽस्येति शूरसेनः । शूराः सेनाः सनायका अनेन । शूरः भीमोऽर्जुनश्च सेनोऽनेन । शूराणां वीररसस्येनश्च ॥

७०९. **यदुश्रेष्ठः–** यदुकुलश्रेष्ठः । यातीति यन् । उच्चत्वादुः । श्रेष्ठश्चेति यदुश्रेष्ठः । यदस्ति तत उच्चत्वाद् यदुः । अत एव सर्वश्रेष्ठः ॥

७१०. **सन्निवासः–** सतां सज्जनानां ज्ञानिनां वा निवासः । सत्सु चायं निवसति । संश्चायं निवास इति सन्निवासः । प्रळये सन्नं जगदस्योदर इति सन्नी । वसति चायं जगतीति वासः ॥

७११. **सुयामुनः–** कालियापनयनेन शोभनो यामुनह्रदोऽनेनेति सुयामुनः । सुयाः सुज्ञाः । सुयज्ञा वा । तेषाममुदमयमपनयतीति च सुया-

मुनः । तमिमं सुयामुदपनयं सन्तं सुयामुनमाचक्षते पारोक्ष्येण । तद्यथा लोकहिताक्षं लोहिताक्षमाचक्षते ॥ ८८ ॥

**भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।**
**दर्प्पहा दर्प्पदो दृप्तो दुर्द्धरोऽथा(द्धाऽ)पराजितः ॥ ८९ ॥**

७१२. **भूतावासः–** यस्मिन् सर्वाणि भूतानि वसन्ति, यश्च सर्वभूतेषु स भूतावासः । भूतानां भूतिमतां मुक्तानामावासश्चायमेनं भूतान्या वसन्तीति । भूतश्चायमावासश्च । भूतानामवनादसनाच्च भूतावासः । भूतानामवनश्च सारभूतश्चेति वा । संहितायां क्षैप्रस्य दीर्घः । पदपाठे लोपः–भूतावस इति । तद्यथा 'आयश्च स चेत्यायासः' इति भागवते प्रयोगः–'ईदृशायास विज्ञाय त्रैविध्यं भाति वस्तुनि' इति । भूतानां जीवानामावासः, पश्च भूतानामावास इत्यादि ॥

७१३. **वासुदेवः–** तृतीयं रूपम् । ६९९तमं द्वितीयम् । ३३३तममाद्यम् । आदावात्मानं वासयत्याच्छादयति, पुण्यपरिपाके सति देवयति प्रकाशयतीति वासुदेवः । संसारिणां वासुः । मुक्तानां देव इत्येतत् । वायोरप्ययमसुदेवः । असुदेवं नियन्तुं याति च । ज्ञानरूपत्वाद् वाः । सुदेवश्च ॥

७१४. **सर्वासुनिलयः–**सर्वेषामसूनां चक्षुरादीनां, प्रधानवायुना सह पञ्चाशन्मरुतां वा निलय इति सर्वासुनिलयः । सर्वश्चायमसुश्च निलयश्च । सर्वश्चासुनिलयश्च । सर्वासु तत्वदेवतासु निलीय स्थितश्च । सर्वासुः सर्वप्रेरको मुख्यावायुरस्य निलय इत्ययं च तस्य निलय इति च सर्वासुनिलयः । अत एव तमनिलयमाचक्षते ॥

७१५. **अनलः–** द्वितीयं रूपम् । २९३तमं प्रथमम् । अनलान्तर्गतः अनलनामा । न लातीति नलोऽदाता न भवति । अलो वा न भवति । अनस्यापि अलङ्कारभूतश्चायम् । अनस्याप्यलं पर्याप्तिरनेन । अनिति चालङ्कारभूतश्च ॥



७१६. **दर्प्पहा–** अदान्तानां दर्पं हन्ति । कन्दर्पहा च ॥

७१७. **दर्प्पदः–** केषाञ्चित् दान्तानामपि दर्पं ददाति । कन्दर्पदश्च ॥

७१८. **दृप्तः–**दृप्तानां दृप्तः स्वयम् । दृढं गुप्तः । दृष्टिगुप्तः । दृष्टोऽपि गुप्त एवायम् । नित्यतृप्तश्च । तृतीयोऽतिशये ॥

७१९. **दुर्द्धरः–** द्वितीयं रूपम् । **२६७**तमं प्रथमम् । दुःखेन धार्यते धारणायामिति दुर्धरः । युद्धेषु चायं दुर्धर्ष इति दुर्धरः । दुष्टानपि धारयत्ययम् । दुःखितानपि, दुःखमपि, नियन्तुम् ॥

७२०. **अपराजितः–** अथाप्ययं न केनापि जित इति अपराजितः । प्रसङ्गादथेत्यव्ययं सामस्तोभाक्षरं च भगवत्परमित्याह । प्रकाशेषु सूर्यादनन्तरश्चन्द्र इति तद्वतो भगवानथपदार्थः । न विद्यते परोऽस्मादित्यपरः । अजितश्चायम् । अथापि स्वेच्छया भक्तहृदये भासते । अथ अपरया अनुत्तमया भक्त्या जितश्च भवति । अजितो जितवत् स्थित इत्यनेनाह । पाठान्तरे अद्धा सर्वात्मना अपराजित इत्येकं पदम् । अधिकमुपरि (८६६) ॥ ८९ ॥

**विश्वमूर्त्तिर्म्महामूर्त्तिर्द्दीप्तमूर्त्तिरमूर्त्तिमान् ।**
**अनेकमूर्त्तिरव्यक्तः शतमूर्त्तिः शताननः ॥ ९० ॥**

७२१. **विश्वमूर्त्तिः–** विश्वमस्य मूर्तिः प्रतिमा । विश्वाख्या च मूर्तिरस्य । विश्वस्मिंश्च मूर्तिरस्येति विश्वमूर्तिः । विश्वाः पूर्णा मूर्तयोऽस्य ॥

७२२. **महामूर्त्तिः–** महती चास्य महनीया च मूर्तिः स्वरूपमिति महामूर्तिः । महनीयश्चायममूर्तरूपश्चेति महामूर्तिः ॥

७२३. **दीप्तमूर्त्तिः–** सूर्यादीनामपि भासयित्री दीप्ता चास्य मूर्तिरिति दीप्तमूर्तिः । जगद्दीपेषु सूर्यचन्द्रादिषु तता मूर्तिरस्य ॥

७२४. **अमूर्त्तिमान्–**प्राकृतमूर्तिमान् न भवतीति अमूर्तिमान् । अपिच अकारवाच्यमूर्तिमान् । न केवलमयममूर्तिः । अप्राकृतशरीरा मुक्ता अप्य-

मूर्तयः । तेऽस्याधीनाः सन्तीत्यमूर्तिमान् । अमूर्तिर्लक्ष्मीः । तस्या अयं पतिरित्यमूर्तिमान् । अश्च सर्वभूतमूर्तिमांश्च । अप्राकृतमूर्तिमांश्च ॥

७२५. **अनेकमूर्त्तिः–** अनेका अनन्ताश्च मूर्तयोऽस्येति अनेकमूर्तिः । अनेकेषु मूर्तिरस्य । अनः प्राणः एका प्रधाना मूर्तिः प्रतीकमस्य ॥

७२६. **अव्यक्तः–** अप्राकृतत्वादव्यक्तः । लक्ष्म्या अधिकं व्यक्तः । अन्येषां यथायोग्यमल्पव्यक्तः । अकारवाच्यश्च व्यक्तश्च मुक्तानाम् । दोषैरक्तो न भवतीति चाव्यक्तः । अविर्मेषः । तत्र संसक्तः । मेषरूपशङ्कर-वाहनः । भक्त्या ये हृदयगुहायामवन्ति तेष्वयमासक्तः ॥

७२७. **शतमूर्त्तिः–** शतमसङ्ख्या मूर्तयोऽस्येति शतमूर्तिः । अष्टोत्तरशत-मूर्तिश्च । शं तनोतीति शता च मूर्तिरस्य ॥

७२८. **शताननः–** शतमसङ्ख्यानि आननान्यस्येति शताननः । शतजन्मसु अनं नयतीति शताननः । आनन्दकरतामरसास्यः । सुखरूपश्च गानानां तानं नयति च ॥ ९० ॥

**एको नैकः सवः कः किं यत् तत् पदमनुत्तमम् ।**
**लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ९१ ॥**

७२९. **एकः–** सर्वरूपेषु स्वत एकः । एष एव करोतीति चैकः । आ समन्ता-दिच्छानन्दस्वरूपत्वादेकः । एतीति एकः सर्वगतः । सर्वप्रधानः । केवलो वा । 'इणः कन्' इति वैयाकरणाः ॥

७३०. **नैकः–**अथाप्यनेकरूप इति नैकः । नकारवाच्यमेकं बुद्धाख्यं रूप-मस्येति नैकः । नास्ति एकमपि भिन्नं गुणक्रियादिकमस्मिन्निति नैकः । नश्चायमेकश्चेति नैकः ॥

७३१. **सवः–** सवेषु गतः सवः । सारत्वात् सः । ज्ञानरूपत्वाद् वः । सवेषु सूयते सोम एतस्य कृते । सुनोति सवति वा । षुञ् अभिषवे । षु



प्रसवैश्वर्ययोः । जगतः प्रसवः । 'प्रसवोऽभ्यनुज्ञा' इति पुरुष-कारः । अभ्यनुजानाति चायं सतां साहसमपि । तद् यथा–'ओमिति ब्रह्मा प्रसौति' इति । सवति सर्वेश्वरो भवतीति च सवः ॥

७३२. **कः–** आनंदरूपः पुरुष इति कः । करोतीति कः । कायति गायतीति कः । कीयते गीयत इति कः । कै शब्दे । क इति पृच्छनीयत्वात् कः । प्रश्नविषयेषु गतत्वाच्च । 'तं सं प्रश्नं भुवनायन्त्यन्या' इति ह्यामनन्ति ॥

७३३. **किम् –** अतिशयितानन्दत्वात् किम् । कायति कीयते चेति किम् । 'कायतेर्डिम्'(७-४४) इति दशपादिका । किमिति पृच्छनीयत्वात् किम् । प्रश्नविषयेषु गतत्वाच्च किम् ॥

७३४. **यत्–**सर्वत्र याति, सर्वं चावगच्छतीति यत् । ये वायौ ततं च यत् । यतन्त एनमवगन्तुममन्तव इति यत् । यच्छब्दविषयेषु गतत्वाच्च ॥

७३५. **तत्–** ततत्वात् तत् । गुणैस्तत इति च तत् । परोक्षत्वाच्च तत् । जगत् तनोतीति तत् । स्वात्मानं बहुधा तनोतीति च । 'त्यजितनियतिभ्यो डित्' (६.४३) इति च । तच्छब्दविषयेषु गतत्वाच्च ॥

७३६. **पदमनुत्तमम्–** अनुत्तमं पदम् । ये स्वपदं मान्ति जानन्ति ते पदमास्तत्वमानिनः । तेषां प्रेरकतमं परतत्वं पदमनुत्तमम् । स्वस्य पदं स्वरूपं स्वयमेव मातीति पदमः । नुत्तमश्च वा । णुद प्रेरणे ॥

७३७. **लोकबन्धुः–** लोकानां बन्धुः । सर्वे लोका ज्ञानिनोऽस्य बन्धवः । लोकान् बध्नाति चायम् । परस्परं पतिपत्नीभावादिना स्नेहेन बध्नाति च । ज्ञानरूपत्वाल्लोकश्चायं बन्धुश्च ॥

७३८. **लोकनाथः–** लोकानां नाथः, लोकैर्नाथ्यते चेति लोकनाथः । लोकश्चायं नाथश्च । लोकानां नाथा अप्यनेन भवन्ति ॥

७३९. **माधवः–** तृतीयं रूपम् । १६७तमं द्वितीयम् । द्वासप्ततमाद्यम् । मधुवंशीयेषु माधवेषु गतः माधवः । माधवमासगतः माधवः । मासानां धवः । मधोरानन्दस्यायं स्वामी ॥

७४०. **भक्तवत्सलः–** भक्तप्रियत्वात् भक्तवत्सलः । भक्तान् वत्सानिव लाति च । महत्सु स्वयं भक्तवद् विनीतः सलति । षल गतौ । असङ्ख्यभक्तवान् सलश्च सर्वगतत्वात् । आत्मानं बहुधा विभक्तवान् सलति च । विभक्तो वत्सलश्च ॥ ९१ ॥

**सुवर्ण्णवर्ण्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।**
**वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ९२ ॥**

७४१. **सुवर्ण्णवर्ण्णः–** रुग्मवर्णमेनं ज्ञानिनोऽपश्यन्निति सुवर्णवर्णः । 'सर्व एव सुवर्णः' इति वर्णयन्ति । 'यदा पश्यः पश्यते रुग्मवर्णम्' इति च । अपौरुषेयतया शोभनैः सर्वैरपि वर्णैः पदैश्च वर्णितश्चायम् । सुखरूपश्च वर्णैरकारादिभिर्वर्ण्यते च । सुवर्णश्च वर्णनीयश्च । वरणीयो वर्णः । वरानन्दो वा वर्णः ॥

७४२. **हेमाङ्गः–** रुग्मवर्णान्यङ्गानि चास्येति हेमाङ्गः । दोषहानाद् हानि, इच्छाज्ञानरूपत्वादिमानि अङ्गान्यस्येति च । हन्ति दुरितानीति हेमानि अङ्गान्यस्य ॥

७४३. **वराङ्गः–** ज्ञानानन्दात्मकत्वाद् वराणि चाङ्गान्यस्येति वराङ्गः । वराः ब्रह्मादयोऽप्यस्य अङ्गभूता इति च वराङ्गः । वरश्च, अनक्तीत्यङ्गश्च वा । वं ज्ञानं रं सुखं चाभिव्यनक्ति वा । अञ्जु व्यक्तिम्रक्षणादौ । वराङ्गे शिरसि स्त्रीणां भगे च स्थितः ॥

७४४. **चन्दनाङ्गदी–** दिव्येन चन्दनेन अङ्गदादिना चालङ्कृत इति चन्दनाङ्गदी । अङ्गदं केयूरमेव वा चन्दनमाह्लादकम् । चन्दनश्च अङ्गदी च वा । 'हारी केयूरवान्' इति ध्यानवचनात् ॥



७४५. **वीरहा–**द्वितीयं रूपम् । १६६तमं प्रथमम् । ९२८ तमं तृतीयम् । वीरानपि हन्ति दैत्यान् । वीरान् नियन्तुं हन्ति गच्छति च । विं पक्षिणं गरुडमीरयन् हन्ति गच्छति ॥

७४६. **विषमः–**विषमेषु विषमः । विगतसमश्चायम् । विशिष्टश्चायं समश्च सर्वभूतेषु, सर्वरूपेषु च । अमृतमथने प्रथमं विषं निर्ममे । विशिष्टे षमे चेष्टाज्ञाने यस्य सः । विषस्य मानं लयश्च प्राणशिवद्वाराऽनेनैव कृतः । संसारविषनाशनाच्च विषमः । शास्त्रमथनेनाज्ञानविषनाशनाच्च । मथनात् पूर्वं मनसि जलधौ च लीनं बभूव विषमनेनेति विषमः ॥

७४७. **शून्यः–** शूना इत्यूनसुखाः जीवाः । तानयं यमयतीति शून्यः । सुखशीलः शुः । ऊनान् यमयन्नून्यः । स चासौ स च शून्यः । सर्वदोषशून्यः ॥

७४८. **घृताशीः–** याज्ञिकैर्हुतं घृतमश्नातीति घृताशीः । दीप्तत्वाद् घृतः । इच्छारूपश्चायम् । भक्तानामाशिषां क्षरणाच्च घृताशीः ॥

७४९. **अचलः–** अनेजनादचलः । अचलेषु गतोऽचलनामा । अश्च सर्वत्र चलति च । 'पर्वतानां हिमालयः' इति हि स्मरन्ति ॥

७५०. **चलः–** सर्वत्र चलतीति चलः । चलेषु गतश्चलनामा । चिनोति लाति च । चकारं वाच्यतया लाति च ॥ ९२ ॥

**अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।**
**सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ९३ ॥**

७५१. **अमानी–** क्वाप्यभिमानाभावात् अमानी । अमितश्च, अनी प्राणनाथश्च । अमितचेष्टावांश्च । अमाया अज्ञानस्यापनयनाच्चामानी । अमायामस्मै दर्शयागे हविर्नीयते । जीवस्वरूपेण अमैव सहैव हृदि नीयते ध्यानकाले ज्ञानिभिः ॥

७५२. **मानदः–** मान्यानां मानं चित्तसमुन्नतिं ददाति, अमान्यानां मानं द्यतीति मानदः । मानं निर्माणं, मानं लयं जगतः करोति । सतां

ज्ञानदः । असतां ज्ञाननाशनः । माया अनस्य च सर्वाभीष्टदः । माया अपि चेष्टाप्रदः । प्रमायै अनं मुख्यप्राणं गुरुत्वेन ददाति ॥

७५३. **मान्यः–** सर्वैः पूज्यत इति मान्यः । मां रमां अनं प्राणं च यमयतीति मान्यः । स्वरूपगुणक्रियादिभिरन्यो न भवतीति मान्यः । मायां प्रमायां जातायां अन्य इति सुज्ञेयः । अन्येन अन्यत्वज्ञानिनैव मीयते च ॥

७५४. **लोकस्वामी–** लोकानां विशिष्य ज्ञानिनां स्वामीति लोकस्वामी । लोकश्च स्वामी च । लातीति लः । ललनाया वा रमायाः, ओः शिवस्य, कयोः ब्रह्मवाय्वोश्च स्वामी ॥

७५५. **त्रिलोकधृक्–** त्रीन् लोकान् त्रिविधांश्च जीवसङ्घान् धारयतीति त्रिलोकधृक् । त्रिभिर्मूर्धभिरमृतक्षेमाभयाख्यान् नित्यलोकान् धरति । 'त्रिलोकधृत्' इति पाठान्तरम् ॥

७५६. **सुमेधाः–** शोभना अज्ञानविपर्ययाभ्यामसम्पृक्ता मेधाऽस्येत्ययं सुमेधाः । सुमे नाभिकमले धातारं धत्त इति सुमेधाः । सुमां प्रमां इच्छां च धत्त इति सुमेधाः । सुमे सुखज्ञाने धत्त इति च ॥

७५७. **मेधजः–** मेधेन ज्ञानयज्ञेन, कर्मणा वा प्रीतः सन् प्रादुर्भवतीति मेधजः । मेधृ सङ्गमे । मेधेन स्त्रीपुंसयोः सङ्गमेन वामेदवयज्ञेन स्वयं जायते शिशुस्थः सन् । जनयति च सन्तानम् । मेधृ हिंसायाम् । अज्ञानाख्यपशुमेधेन जायते ज्ञायत इति मेधजः ॥

७५८. **धन्यः–** निरपेक्षो गुणैः पूर्णो धन्यः । धनं याति । धनं यमयति । ज्ञानधनं च ॥

७५९. **सत्यमेधाः–** सत्यप्रज्ञः सत्यमेधाः । सत्यमेधयति । सत्यश्च प्रमां धत्त इति मेधाश्च । सत्यं जगत् मेधति नाशयति । सङ्गमयति च ॥

७६०. **धराधरः–** धरां धरन् धराधरः । भुवं, भूमानिनीं, लक्ष्मीं च । धरायां आ समन्तात् धराः पर्वताः येन निर्मिताः स धराधरः । धरान्



आधरतीति च धराधरः । धरा अधरा सर्वभूतावरा यस्मात् । धरा च धराः पर्वताश्च अस्येति धराधरः । ऋतधराः वेदा यस्याधरे स धराधरः ॥ ९३ ॥

**तेजोवृषो द्युतिधरः सर्वशस्त्रभृतांवरः ।**
**प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ९४ ॥**

७६१. **तेजोवृषः–** तेजसां वर्षणात् तेजोवृषः । तेजोरूपश्च वृषश्च । वितते जगति अयमेकोऽजः । अथापि लीलया जायते भक्ताभीष्टवर्षणाय ॥

७६२. **द्युतिधरः–** अनुपमां द्युतिं धरन् द्युतिधरः । धरेषु पर्वतेषु द्योतते । लोकधारकेषु द्योतते । द्योतते च धरति च । द्युतिधरेषु गतश्च ॥

७६३. **सर्वशस्त्रभृतांवरः–** सर्वाणि च तानि शस्त्राणि, सर्वे च ये शस्त्रभृतः, तेषां वरः । आज्यप्रउगादिशस्त्रमन्त्रभृतां वरश्च । युद्धकाले सर्वशस्त्रैः भृतं पूर्णमम्बरं येन ॥

७६४. **प्रग्रहः–** भक्तानां प्रग्रहणात् प्रग्रहः । रथरश्मिगतस्तन्नामा । प्रकृष्टैर्गृह्यत इति च । प्रकर्षेण गृह्यते । प्रकृष्ट इति गृह्यते ॥

७६५. **निग्रहः–** दुष्टानां निग्रहणात् निग्रहः । भक्तांश्च नितरां गृह्णाति । भक्तैश्च हृदि निधाय गृह्यते । नीचैर्गिरन्तीति निग्रानसुरान् जहाति ॥

७६६. **व्यग्रः–** उत्तरकाष्ठारहितो विगताग्रो व्यग्रः । व्यग्रेषु स्थितस्तन्नामा । वाति अग्रे । विश्व अग्रश्च । वीन् ज्ञानिनः, अगानज्ञानिनश्च रमयति राययति च ॥

७६७. **नैकशृङ्गः–** अनेकशृङ्गेषु हरिणादिषु स्थितस्तन्नामा । अवतारविशेषेषु च नैकशृङ्गः । नैकानि गिरिशृङ्गाणि वासस्थानान्यस्य । नैकानि शृङ्गाणि प्रभुत्वान्यनेन ॥

७६८. **गदाग्रजः–** कृष्णावतारे गदस्य रोहिणीतनयस्याग्रजः । संसराख्यस्य गदस्याग्रे अन्ते जायत इति गदाग्रजः । गदाया अग्रे संहारशक्तिरूपेण

अभिव्यक्तः । 'भूः स्वाहा' इत्यादीनां निगदानामग्रे व्यज्यत इति च गदाग्रजः । आदौ वेदान् गदतीति गदः । अग्रे जातश्च । अग्रजो ब्रह्मा वेदानां गदो वक्ता येन । गदारूपो वायुरग्रे जातो यस्मात् । 'यस्य गदा पवमानः' इति ह्याचार्यवचनम् ॥ ९४ ॥

**चतुर्म्मूर्त्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।**
**चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ९५ ॥**

७६९. **चतुर्म्मूर्त्तिः–** चतस्रः मूर्तयः विश्वतैजसप्राज्ञतुरीयाख्या अस्येत्ययं चतुर्मूर्तिः । चतुरमूर्तिश्च सः । शुक्लं रक्तं रौग्मं कृष्णमिति चतुर्भी रूपैरुपेता मूर्तिरस्य । चतुर्भिर्वेदैः, नामाख्यातोपसर्गाव्ययैश्च वर्णनीयाऽस्य मूर्त्तिः ॥

७७०. **चतुर्बाहुः–** चत्वारोऽस्य बाहव इति चतुर्बाहुः । चतुर्भिरश्वैर्वाह्यत इति चतुर्बाहुः । दैत्यान् दानवान् राक्षसान् पिशाचांश्चेति चतुरो बाधत इति चतुर्बाहुः । बाधतेर्हकार इति वैयाकरणाः । चत्वारि चक्रादीनि यस्य बाहौ । चतुर्विधा बाः पुरुषार्थाः । ब कामने । तान् जुहोति ददातीति चतुर्बाहुः । पत्रं पुष्पं फलं तोयमिति चत्वारि भक्त्या दत्तानि जुहोत्यादत्त इति चतुर्बाहुः । हु दानादानयोः ॥

७७१. **चतुर्व्यूहः–** द्वितीयं रूपम् । १३८तमं प्रथमम् । वासुदेवसङ्कर्षण-प्रद्युम्नानिरुद्धाख्याः चत्वारो व्यूहा अस्येति चतुर्व्यूहः । चतुर्भिराश्रमैर्वर्णैर्वा उपासीना एनं विविधमूहन्ते । चतुर्भिर्वेदैश्च ॥

७७२. **चतुर्गतिः–** चतुर्णां वर्णानामाश्रमाणां च गतिः । चतुर्णां आर्तानां जिज्ञासूनां अर्थार्थिनां ज्ञानिनां च गतिरिति चतुर्गतिः । चतुर्णां पुरुषार्थानां च गतिः । चतुरवस्थाप्रेरकश्चायम् ॥

७७३. **चतुरात्मा–** द्वितीयं रूपम् । १३७तमं प्रथमम् । चतुरश्चायमात्मा । चत्वारश्च आत्मान्तरात्मपरमात्मज्ञानात्मानोऽस्यात्मान इति चतुरात्मा । रामलक्ष्मणभरतशत्रुघ्नात्मना वा चतुरात्मा । चतुर्भिः अकारोकारमकारनादैः 'ओ श्रावय' इत्याद्यैश्चतुरक्षरैर्मन्त्रैर्वा, विश्वतैजसप्राज्ञतुरीयैश्चतुर्भी रूपैर्वा आप्यते गम्यत इति च । मुक्तैश्च चतुर्भिः सालोक्यसामीप्यसारूप्यसायुज्यभाजनैर्गम्यते ॥



७७४. **चतुर्भावः–** चत्वारि अण्डजादीनि जीवजातानि भावयतीत्ययं चतुर्भावः । चतुर्णां वर्णानां चत्वारः भावाः स्वभावा अनेन । 'चातुर्वर्ण्यं मया सृष्टम्' इति ह्याह । चत्वारो वर्णा आश्रमा वा भवन्त्यनेन । कुटीचकादींश्चतुरो न्यासिनश्च भावयति । न्यासिभिश्चायं भाव्यते ॥

७७५. **चतुर्वेदवित्–** अयमेक एव वेत्ति चतुरो वेदानिति चतुर्वेदवित् । चतुरोऽपि वेदान् विन्दति वाच्यतया । पञ्चरात्रं, रामायणं, भारतम्, पुराणानि च चत्वारः पौरुषेया वेदाः । तानपि वेत्ति विन्दति च ॥

७७६. **एकपात्–** विश्वानि भूतान्येकः पादोऽस्येति एकपात् । अयमेक एव सर्वं पाति चात्ति च ॥ ९५ ॥

**समावर्त्तोऽनिवृत्तात्मा दुर्ज्जयो दुरतिक्रमः ।**
**दुर्ल्लभो दुर्ग्गमो दुर्ग्गो दुरावासो दुरारिहा ॥ ९६ ॥**

७७७. **समावर्त्तः–** सम्यगावर्तयति संसार इति समावर्तः । आवर्तयति सृष्टि-चक्रमिति वा । सम एव आ समन्ताद् वर्तते । मया सहितः समः । आवर्तत इत्यावर्तः । कालतो देशतश्च समया रमया सह वर्तत इति समावर्तः । समानि समस्तानि सत्वरजस्तमांसि अवर्तमानान्यत्र । सम्पूर्णत्वात् सं चाऽवर्तश्च ॥

७७८. **अनिवृत्तात्मा (निवृत्तात्मा)–** अनिवृत्तोऽस्यात्मेति अनिवृत्तात्मा । अनिषु प्राणिषु वृत्तो वाऽत्मा । अश्च निवृत्तात्मा च । अनी प्राणाख्य-पुत्रवान् वृत्तात्मा च । अथ च सर्वतो निवृत्तो निर्लिप्तोऽयमात्मा ॥

७७९. **दुर्ज्जयः–** भक्तिज्ञानादिना बहुजन्मसञ्चितेन महता प्रयासेन जयत्येनम्, तदपि तदनुग्रहबलेनैवेति दुर्जयः । दुरिति निषेधे च वर्तते । न केनापि जीयत इति दुर्जयः । दुष्टान् जयति । दुरितं जयति ॥

७८०. **दुरतिक्रमः–** न कोऽप्यमुमतिक्रामतीति दुरतिक्रमः । दुःखमयं संसार-मतीत्य एनं क्रामन्तीति च दुरतिक्रमः ॥

७८१. **दुर्ल्लभः–** अभक्तानां दुर्लभः । अलभ्यः । भक्तैश्च दुःखेन लभ्यते । दुष्टान् लाययन् भाति । दुःखं लान् भाति विनाशयति च ॥

७८२. **दुर्ग्गमः–** अगम्यो दुर्गमः । भक्त्या पुनर्दुःखेन गम्यते अवगम्यते च भगवान् । दुर्ग इति मीयते । दुर्गेषु शास्त्रेषु मीयते ॥

७८३. **दुर्ग्गः–** दुर्गेषु गतस्तन्नामा । दुःखिषु, दुःखिभिरवगतः । दुःखेन चावगतः । अनवगतश्च दुष्टानाम् । शिष्टपालनाय दुष्टानभिगच्छति च । अपगमयति दुःखं च दुरितं च ॥

७८४. **दुरावासः–** दुरावासः दुःखेन ज्ञानिभिर्हृदय आवास्यत इति । अज्ञानिनां दूरावासो वा दुरावासः । ये दुष्टानावान्ति तानस्यति ॥

७८५. **दुरारिहा–**दुष्टान् आपततोऽरीन् हन्तीति दुरारिहा । तदपि दूरतः दृष्टिमात्रेण आहते । न कचाकचि न मुष्टीमुष्टि युध्वा ॥ ९६ ॥

**शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्द्धनः ।**
**इन्द्रकर्म्मा महाकर्म्मा कृतकर्म्मा कृतागमः ॥ ९७ ॥**

७८६. **शुभाङ्गः–** द्वितीयं रूपम् । ५९१तममाद्यम् । शुभानि ज्ञानानन्द-मयान्यङ्गान्यस्येति शुभाङ्गः । शुभानङ्गति गच्छति ॥

७८७. **लोकसारङ्गः–** त्रयाणां लोकानां सारं सङ्गमय्य त्रीण्यक्षराण्यकुरुतेति लोकसारङ्गः । ज्ञानरूपत्वात् लोकः । सारभुक्त्वाच्च सारङ्गः । भक्तानां च सारमेव गमयति, न पुनरसारं दुःखाज्ञानादिकम् । लोकसारं चतुर्मुखं गमयति चरमोपदेशाय । लोकसारेण गम्यते । बिन्दुरव-



धारणे । ज्ञानरूपत्वाल्लोकः । साराङ्गश्च । लोक्यत्वाद्वा लोकः । लोकसारा ब्रह्मादयोऽस्याङ्गभूताः ॥

७८८. **सुतन्तुः–** ब्रह्मणा वायुना वा शोभनसन्तान इति सुतन्तुः । शोभनाः तन्तवः नामाख्यानि दामान्यस्येति सुतन्तुः सर्वशब्दवाच्यः । सुतं ब्रह्माणं वायुं वा तुदति प्रेरयति । सुतं वा सोमभागं तत्तद्देवेषु तुदति । सुष्ठु सर्वं तनोति तुदति च । प्रेरणेऽपि तुदतिं मन्यन्ते ॥

७८९. **तन्तुवर्द्धनः–** तन्तुं देवमनुष्यतिर्यगाद्यात्मना वर्धयतीति तन्तुवर्धनः । अन्ते च तन्तुं वर्धयति नाशयतीति तन्तुवर्धनः । संसारतन्तुं च वर्धयति राजसानाम् । नाशयति सात्विकानाम् ॥

७९०. **इन्द्रकर्म्मा–** इन्द्रं सर्वसमर्थं कर्मास्य । इन्द्रस्य कर्माप्यस्यैव कर्मेति इन्द्रकर्मा । इन्द्रश्च सर्वकर्तृत्वात् मातृत्वात् कर्मा च ॥

७९१. **महाकर्म्मा–** द्वितीयं रूपम् । ६७६तमं प्रथमम् । महान्ति चास्य कर्माणि । महनीयश्चायमकर्मा च । मह्यते चायमकर्मेति च । मश्च हश्चायमकर्मा च ॥

७९२. **कृतकर्म्मा–** कृतमेव सर्वं, न कर्तव्यमस्येति । कृतानि कर्माणि जीवजातान्यनेन । जीवानां कर्माणि च ॥

७९३. **कृतागमः–** द्वितीयं रूपम् । ६५९तमं प्रथमम् । आगमैः गुणपूर्णत्वेन कृतो निरूपितः । भक्तरक्षार्थं कृतमागमनं येन । कृता आगमा यद-र्थम् । कृतमगमचरं जगद् येन, मन्तृत्वान्मश्च । अकृत आगमो यस्येति वा ॥ ९७ ॥

**उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।**
**अर्क्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥ ९८ ॥**

७९४. **उद्भवः–** द्वितीयं रूपम् । ३७४तमं प्रथमम् । उत्कृष्टो भवति, उद्गतो भवति, स्वयं स्वेच्छया उद्भवति, जगच्चानेनोद्भवतीति । उच्चत्वा-

दुत् । भवत्यनेन सर्वमिति भवः । उदे भवति । बाह्यजगत उत्कृष्य स्वप्नप्रपञ्चमनुभावयति ॥

७९५. **सुन्दरः–** जगन्मोहनसौन्दर्यशाली । सुखं ददत इति सुन्दानि ज्ञानानि, तानि राति । सुखदारणाच्च सुन्दरः ॥

७९६. **सुन्दः–** सुखदानात् सुन्दः । भक्त्या सुष्ठु उनत्ति क्लिद्यति वा । सौष्ठवं ददाति वा ॥

७९७. **रत्ननाभः–** चतुर्मुखाख्यं पुत्ररत्नमस्य नाभाविति रत्ननाभः । रतिर्वा रत्नम् । रतिगर्भः । विश्वाख्यं वा रत्नमस्य नाभौ । रत्नं रतिं नयत्यपनयति चेति रत्ननः आ भाति । रतिनयनाद् रत्नः । लोकनेतृष्वा-भाति च । अभः ज्ञानानन्दादिरहितो न भवतीति च नाभः । भ आनन्दे । भ ज्ञाने । स्वयं रत्नः सुखरूपः सन्नयं नभेषु दुःखिषु गत इति नाभः । रत्नमिव रमणीया नाभिरस्य ॥

७९८. **सुलोचनः–** सुन्दरे लोचने अस्येति सुलोचनः । सुन्दरं आलोचनं चास्य भवति । सुष्ठु लुप्तसंसाराः सुलावः मुक्ताः । तैश्चीयते नित्यमाराध्यत इति सुलोचनः । चायृ पूजानिशामनयोः । लुप्तभा भविनोऽपि सुलावः । तैरपि दुःखप्रहाणाय चीयते ॥

७९९. **अर्कः–** अर्च्यत्वादर्कः । अर्चनसाधनं कं जलमस्येति च । अरं कं सुखमस्येति च । अर्कगतश्च तन्नामा ॥

८००. **वाजसनः–** वाजमन्नं, ज्ञानयुद्धं वा सनोति ददातीति । वाजिरूपेण यजुर्वेदं सूर्यगः सन् ददाति याज्ञवल्क्यायेति वाजिसन एव वाज-सन उच्यते । 'वाजसनिः' इति क्वचित् ॥

**॥ इति नाम्नामष्टमं शतकम् ॥**

८०१. **शृङ्गी–** शृङ्गवान् मत्स्यादिरूपेषु । चत्वारो वेदा अस्य शृङ्गानीवेति च शृङ्गी । 'चत्वारि शृङ्गा' इति हि श्रुतिः । शृणाति च जगत् । गीयते च वेदैः । शृङ्गवत्सु गतस्तन्नामा चायम् ॥



८०२. **जयन्तः–** भक्तानां जयं तनोतीति जयन्तः । जयतीति जयन्तः । जि अभिभवे इत्यतो जीयादिति जयन्तो राजेति वैयाकरणाः । राजसु गतो जयन्तः । जनयति, यमयति, तनोति च । जयन्तगतस्तन्नामा ॥

८०३. **सर्वविज्जयी–** सर्वविदः लब्धकामान् सर्वज्ञान् ब्रह्मादीनपि जयतीति सर्वविज्जयी । सर्विच्चासौ जयी च वा । सर्वविदः जयिनः अनेन । पूर्णत्वात् सर्वः । वेत्ति विन्दति वेदयतीति विच्च, जयी च ॥९८॥

**सुवर्ण्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।**
**महाह्रदो महागर्त्तो महाभूतो महानिधिः ॥ ९९ ॥**

८०४. **सुवर्ण्णबिन्दुः–** सुवर्णौ अकार उकारश्च बिन्दुर्मकारश्च यस्य वाचकाः स सुवर्णबिन्दुः । सुवर्णं कोशं विन्दतीति सुवर्णबिन्दुः । सुवर्णं वेदं वाच्यतया विन्दतीति सुवर्णबिन्दुः । सुवर्णान् अकारादिक्षकारान्तान् वा विन्दति । सुवर्णाः बिन्दवः अङ्गान्यस्येति वा ॥

८०५. **अक्षोभ्यः–** रक्षोभिरक्षोभ्यः । न केनापि क्षोभ्यते । अक्षयत्वादक्षः । उच्चं भमानन्दं ज्ञानं वा यातीति उभ्यः । अधिकमुपरि (९९९) ॥

८०६. **सर्ववागीश्वरेश्वरः–** सर्वासां वाचां, सर्वेषां च वागीश्वराणामीश्वर इति सर्ववागीश्वरेश्वरः । सर्वं वक्तीति सर्ववाक्, ईश्वराणाम-पीश्वरश्चायम् । सर्वश्च वागीश्वरेश्वरश्च ॥

८०७. **महाह्रदः–** महानयं ज्ञानानन्दह्रदः । महाह्रदेषु गतश्च । महश्चायमा ह्रादत इत्याह्रदश्च । ह्राद अव्यक्ते शब्दे । पृषोदरादित्वात् ह्रस्व इति वैयकरणाः । ह्रदधातुरप्यासीदिति भाति । महानाह्लादो वा महा-ह्रदः । महमाहरति ददाति च फलमिति च ॥

८०८. **महागर्त्तः–** संसारगर्तः महान् दुरतिक्रमो जीवानामनेनेति महागर्तः । महति तमोगर्ते निगूढः । अज्ञानगर्ते वा तामसानाम् । महान्तो गर्ता

अवटा भूमावनेन । महान्तोऽगा अश्वत्थादयो हिमालयादयश्च । तेषु ऋतो गतः । महांश्चायमगर्तश्चेति ॥

८०९. **महाभूतः–** महानयं भूतः । महान्ति भूतान्यनेन सृष्टानीति च महाभूतः । महाभूतिरस्येति महाभूतः । महानयम्, न भवति न जायत इत्यभूः, भवतीति भूर्वा, ततश्च । महाभूतगतश्च ॥

८१०. **महानिधिः–** महानयं गुणनिधिः । महान्तो निधयश्चानेन । महान्, अनिनः प्राणिनः धत्ते च । अश्चायं ज्ञानिनां निधिश्च ॥ ९९ ॥

**कुमुदः कुन्दरः कुन्दः पर्ज्जन्यः पावनोऽनिलः ।**
**अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ १०० ॥**

८११. **कुमुदः–** द्वितीयं रूपम् । ५९४तमं प्रथमम् । कुत्सितानां मुदं द्यति । कुमुदगतः कुमुदः । कोः भूमेर्मुदाऽनेन । कुमुच्च अश्च । कुरवो मोदन्तेऽनेन ॥

८१२. **कुन्दरः–** कुं कुत्सितं जनं दारयन् कुन्दरः । कुं भूमिं दारयन् वराहरूपेण कुन्दरः । कुन्दैः कुसुमैः रमते । कुं भूमिं ददत्सु वदान्येषु रमते । कुत्सितानां दरो भयमनेन ॥

८१३. **कुन्दः–** कुं भूमिं ददातीति कुन्दः । स्वयं च काश्यपाय ददाति । कुत्सितं जनं द्यतीति कुन्दः ॥

८१४. **पर्ज्जन्यः–** पर्जन्यगतः पर्जन्यनामा । परा उत्तमा अपि अस्य जन्याः इति पर्जन्यः । पर्जन्यवदभीष्टवर्षणात् पर्जन्यः । परस्य जीवस्यार्थे सर्वं जनयति । पृषु सेचने । मेघगतः पर्षति गर्जति चेति पर्जन्य इति वैयाकरणाः । तेषां पक्षे 'अन्यप्रत्ययः' राजन्य इति यथा ॥

८१५. **पावनः–**द्वितीयं रूपम् । २९२तमं प्रथमम् । सर्वं पुनातीति पावनः । पालकानां देवानामप्यवनः । पतितानप्यवति ॥

८१६. **अनिलः–** द्वितीयं रूपम् । २३५तमं प्रथमम् । अनिलान्तर्गतोऽयमित्यनिलः । अश्चायमन्येषां निलयश्च । अनिनः प्राणिनोऽत्र लीना



भवन्ति । लाति चायमनिनः । अनिनां चायं लाति सर्वं ददाति । अनन्त्यनेन सर्वे । अनितेरिलच्प्रत्यय इति वैयाकरणाः ॥

८१७. **अमृताशः–** अमृतमश्नाति । अमृता देवा अपि मुक्ता अप्यस्यान्नमिति अमृताशः । अमृतया रमया सह लीलया सुखमश्नाति । अमृतायाः शमनेन । आशा अप्यनेन । अमृता अभग्ना आशा इच्छा अस्येत्यमृताशः । अमृतश्च आश आनन्दमयश्च ॥

८१८. **अमृतवपुः–** अमृतं नित्यं वपुरस्येति अमृतवपुः । अमृतानां मुक्तानां वं ज्ञानं पुष्णातीति अमृतवपुः । अमृतश्च उप्यते पूर्वकर्मानुसारेण सर्वमनेनेति वपुश्च ॥

८१९. **सर्वज्ञः–** द्वितीयं रूपम् । ४५५तममाद्यम् । सर्वं जनयति सर्वज्ञः । सर्वेषु सुप्तेष्वयं ज्ञः । सर्वेऽपि ज्ञा जीवा अस्येति सर्वज्ञः । सरति वाति च जीवानिति सर्वज्ञः ॥

८२०. **सर्वतोमुखः–** 'विश्वतश्चक्षुरुत विश्वतोमुखः' इति सर्वतोमुखः । सृतमनेन विश्वमिति सर्वः सर्वगतः । तनोति भक्ताभीष्टमिति तः । ओः शम्भोरपि मुखः प्रमुखः । सर्वतीति सर्वः । षर्व हिंसायाम् । सर्वतः सर्वेषु नाशकेषु अयं प्रमुखः । सर्वता जगन्नाशकता । तस्यामयमुमुखः प्रमुखः शम्भोरपीति ॥ १०० ॥

**सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।**
**न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिसूदनः ॥ १०१ ॥**

८२१. **सुलभः–** भक्तानां सुलभः । सुलाः सुखदाः । तेषु भाति । सुष्ठु लान्तीति वा सुलाः । वदान्याः । तेषु भाति । ते च भान्त्यनेन । सुखं लभन्तेऽनेन ॥

८२२. **सुव्रतः–** द्वितीयं रूपम् । ४५७तममाद्यम् । सुखरूपः वरणीयश्च ततश्च । सुवेषु सुज्ञानिषु रतः । सुज्ञाने च रतः । समीचीने वं रं च ज्ञानं रमणं च सुवरे एव सुव्रे । तत्र रतस्ताभ्यां ततो वा ॥

८२३. **सिद्धः–** द्वितीयं रूपम् । ९७तममाद्यम् । सिचो बन्धनानि सितान् बद्धान् वा धत्ते । सिद्धा मुक्ता अस्य सन्ति । सर्वाः सिद्धीश्चायं धत्ते । नित्यसिद्धा च रमाऽस्य भार्यात्वेनाऽस्ति ॥

८२४. **शत्रुजित्–** देवशत्रून् जयतीति शत्रुजित् । सात्विकानां वा शत्रून् । अन्तःशत्रून् कामादीन् जयन्त्यनेन ॥

८२५. **शत्रुतापनः–** देवशत्रून् तापयतीति शत्रुतापनः । ज्ञानशत्रून् वा । अविद्याशत्रुरयं तापनश्चासुराणाम् ॥

८२६. **न्यग्रोधः–** न्यग्रोधगतः न्यग्रोधनामा । 'आल' इति भाषायाम् । न्यक्कृत्य शत्रून् रुणद्धि रोधयति च । विश्वद्रुमगः न्यक् नीचैः रोहति च । 'न्यग्रोधश्च शमीतरौ' इत्यभिधानाच्छमीगतश्च न्यग्रोधः । न्यग्रोध उदुम्बर इति स्थिते पुनः सन्धिः । शिरोपधानमितिवत् । 'सहस्रपादाक्षिशिरोरुबाहवे' इतिवच्च । 'लोपशि पुनः सन्धिः' इति सारस्वतं व्याकरणम् । रूपाणाममभेदज्ञापनाय च लोपसन्धिः ॥

८२७. **उदुम्बरः–** उदुम्बरगतः उदुम्बरः । 'अत्ति' इति भाषायाम् । उत्कृष्टः सर्वस्मादुद्गतः, उं तामसं उग्रं बेन कामितेन राहयति । उं शम्भुं वृणाति च । उत्कृष्टटाम्बर इत्युदम्बर एवोदुम्बरः ॥

८२८. **अश्वत्थः–** अश्वत्थगतः अश्वत्थः । 'अरळि' इति भाषायाम् । आशुवानादश्वः । ततश्च सर्वत्र, सर्वस्यान्तः स्थितश्चेति त्थः । अश्वाकारः स्थित इति चाश्वत्थः । अश्वेषु च स्थितः । अकारवाच्यः शुन्यपि स्थितः । 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इति हि स्मरन्ति । 'अहं वै श्वा नरो भूत्वा' इति च । चलतया अश्ववदाचरतीत्यश्वत् जगत्, तदस्य थमन्नमित्यश्वत्थः । 'अन्नं थम्' इति श्रुतिः । स्थितिहेतुत्वादन्नं थमित्युच्यत इत्यर्थः । हयग्रीवरूपेण अश्वतीत्यश्वन् भगवान् । स्थितश्च सर्वत्र ॥



८२९. **चाणूरान्ध्रनिसूदनः–** अन्ध्रदेशगतं चाणूराख्यं मल्लं सूदितवानिति चाणूरान्ध्रनिसूदनः । नीचाः, अणवः क्षुद्राश्च, रान्ध्राश्च परच्छिद्रान्वेषिणश्च ये तेषां निसूदनः । तमेनं नीचाणुरान्ध्रनिसूदनं सन्तं चाणूरान्ध्रनिसूदमाचक्षते परोक्षेण । ये च वाचा अणवः, उपरेण शरीरेण अन्धरतयः, तेषां च निसूदनः । तमेनं वाचाणूपरान्ध्रनिसूदनं चाणूरान्ध्रनिसूदनमाचक्षते । चाणूरस्य, अन्ध्रस्य अन्ध इत्यन्नम् अन्नरतस्य निसूदनः । चिताः सङ्गताः अणवः क्षुद्राः, रत्या अन्धाः रान्धाः, तेषां रं सुखं निसूदयति । तमेनं चाणुरान्धरनिसूदनं चाणूरान्ध्रनिसूदनमाचक्षते । येये च चाणूर इवान्धरतयस्तानयं निसूदयति । चकारवाच्यश्च, अणुश्च । उच्चं रन्ध्रं हृदयाख्यं वासस्थानमस्येत्युरन्ध्रश्च, दोषनिसूदनश्च । अथच ओः शम्भोः रन्ध्रं क्वचिद्धरिणा सह स्पर्धादिकं दोषं निसूदयति च । ये चाणमन्नमेव केवलमूरीकुर्वन्ति ते चाणूरा उदरम्भरयस्तुन्दपरिमृजाः । अत एवान्धसि अन्ने रता । अन्धे वा तमसि रताः । तानयं नीचैः सूदते निरस्यति सूदयति घातयति वा । षूद क्षरणे । क्षरणं निरसनम् । षूद घाते च । चणश्चाणश्चान्नमिति वैयाकरणाः । केचित् 'चाणूरान्ध्रनिषूदनः' इति पठित्वा सुषामादित्वात् षत्वमित्याचक्षते । 'निसूदनः' इत्येव प्रतनः पाठः । अधिकं भूमिकायाम् ॥ १०१ ॥

**सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।**
**अमूर्त्तिरनघोऽचिन्त्यो भयकृद् भयनाशनः ॥ १०२ ॥**

८३०. **सहस्रार्चिः–** सहस्राणि अर्चींष्यस्येति अनन्तदीप्तिः । जनानां सहस्रैरर्चितः । पुष्पसहस्रैरर्चितः । मन्त्रसहस्रैरर्चितः । तुळसीमञ्जरीसहस्रैरपि । अवताररूपेष्वपि सह सरन्त्यर्चींष्यस्य । अर्चितान्यनन्तानि रूपाण्यस्य ॥

८३१. **सप्तजिह्वः–** सप्तजिह्वेऽग्नौ स्थितः सप्तजिह्वः । सप्तभिरपि विभक्तिभिरयमेव हूयते इति सप्तजिह्वः । कर्ता कर्म च करणमित्याद्या विभक्त्यर्थाः स एवेत्यर्थः । सप्तभिरिन्द्रियैः जिह्वाभिरिव विषयानत्ति लीलया । 'अधिष्ठाय मनश्चायं विषयानुपसेवते' इति हि स्मरन्ति ॥

८३२. **सप्तैधाः–** सप्तेन्द्रियगतस्य सप्त रूपादयः समिधोऽस्येति सप्तैधाः । सप्तेन्द्रियाणि धातवो वा एधन्तेऽनेनेति सप्तैधाः । सप्ताः सजटा मुनय एधन्तेऽनेन । सप्त पाण्डवानामक्षोहिण्य ऐधन्तानेन । सप्त-लोकाः सागरा गिरयो नद्यश्च एधन्तेऽनेन । सप्तर्षयः सप्त स्वरा सप्त वासराश्च ॥

८३३. **सप्तवाहनः–** सप्त च्छन्दांसि वाहनान्यस्येति सप्तवाहनः । सप्त वासरा वा । सप्त लोकान् वाहयति । सप्त महानदीर्वाहयति । सप्त कुलाचलान् वहति च । सप्तान् सजटान् योगिनो वहति । सप्तर्षीन् वा । सप्त स्वरा एनमेव गायन्तो वहन्ति । सप्तविद्या वाहयन्त्येनम् । सप्त धातून् वहत्ययम् । दत्तव्यासादिरूपेषु सया जटयासहित इति सप्तः । सर्वं वाहयति सर्ववाहनगतश्चेति वाहनः । सप्तवाहः सप्ताश्वः सविता । तं नयति ॥

८३४. **अमूर्त्तिः–** मूर्तिः प्राकृतं रूपमस्य न भवतीति अमूर्तिः । अकारवाच्या च मूर्तिरस्य । अप्राकृता मूर्तिरस्य ॥

८३५. **अनघः–** द्वितीयं रूपम् । १४६तमं प्रथमम् । शरीरारम्भकमघमस्य न विद्यत इत्यनघः । अनघा मुक्ता अस्य सन्ति । न विद्यतेऽघं दुःखं यस्य सोऽनघः । 'अघं दुःखं' इति ह्यभिदधति । अनश्च घर्मश्च ॥

८३६. **अचिन्त्यः–** इदमित्थमिति पूर्णतया चिन्त्यो न भवति इति अचिन्त्यः । अकारवाच्य इति चिन्त्यः ॥

८३७. **भयकृत्–** अभक्तानां भयकृत् । नियतिमुल्लङ्घयतां भयकृत् । भं आनंदं यं ज्ञानं च करोति, कृन्तति वा । भक्तानां च भयं कृन्तति ॥



८३८. **भयनाशनः–** भक्तानां भयनाशनः । ये भयं नाशयन्ति तानपि भयनाशानयं नयति । असतां भययोरानन्दज्ञानयोर्नाशनः ॥ १०२ ॥

**अणुर्बृहत् कृशः स्थूलो गुणभृन्निर्गुणो महान् ।**
**अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्द्धनः ॥ १०३ ॥**

८३९. **अणुः–** अणोरप्यणीयान् । जीवान्तर्यामी । अश्चायं नूयते सर्वैः । णु स्तुतौ । अश्चाऽनन्दशीलश्च । अण शब्दे । अण्यत इत्यणुः । अण गतौ । अणति सर्वत्रेत्यणुः । अणति जानाति सर्वमित्यणुः ॥

८४०. **बृहत्–** महतोऽपि महीयान् । बृहतोऽपि हन्ति । ब्रह्मादयोऽपि बृंहन्त्यनेनेति बृहत् ॥

८४१. **कृशः–** कृशस्यापि अन्तर्यामीति कृशादपि कृशः । कृशगतः कृशः । करोति शं भक्तानामिति कृशः । करोति तनूकरोतीति च कृशः । शो तनू करणे ॥

८४२. **स्थूलः–** स्थूलमप्यतिगत इति स्थूलादपि स्थूलः । स्थूलवस्तुगतः स्थूलः । निष्प्रज्ञं स्थूलमुच्यते । स्थूलयति जडमिति स्थूलः । कूटं स्थूलमुच्यते । स्थूलं चराचरकूटमस्यास्ति नियम्यतयेति स्थूलः । स्थूलयति परिबृंहयति जगदिति स्थूलः । स्थूल परिबृंहणे ॥

८४३. **गुणभृत्–** सर्वान् गुणान् बिभर्ति । गुणभूतान् ब्रह्मादीन् बिभर्ति ॥

८४४. **निर्गुणः–** त्रिगुणातीत इति निर्गुणः । गुणभूतान् ब्रह्मादीनतीत इति च । ज्ञानिभिर्निर्णीतगुणः । निर्गुणा मुक्ता अस्य सन्तीति निर्गुणः । निर्णिक्ता गावो वाचोऽस्येति निर्गुः णश्च ॥

८४५. **महान्–** देशतः कालतो गुणतः शक्तितश्च महान् । सर्वेभ्योऽपि महान् सर्वोत्तमः । महेष्वनिति । महनीया अप्यनेनानन्ति ॥

८४६. **अधृतः–** केनापि न धृतः । अ इति ज्ञानिभिर्धृतः ॥

८४७. **स्वधृतः–** स्वेनैव धृतः । स्वीयैरपि भक्त्या हृदये धृतः । अथापि सम्यगधृतः । स्वभक्ताश्च धृता अनेन । सुखरूपोऽधृतश्च ॥

८४८. **स्वास्यः–** सुन्दरं आस्यमस्येति स्वास्यः । स्वरूपभूतं चास्यमस्य । आस्यमिति सर्वाङ्गोपलक्षणम् । स्वीयान् न स्यति च ॥

८४९. **प्राग्वंशः–** सर्वतः प्राचीनतमोऽस्य वंशः आदिजीवस्य चतुर्मुखस्यापि जनकत्वादिति प्राग्वंशः । पुरातनत्वात् प्राक् । वं च शं चास्य स्त इति वंशः । यज्ञशालायां प्राग्वंशे स्थितः प्राग्वंशः ॥

८५०. **वंशवर्द्धनः–** वंशं वर्धयति नाशयति चेति वंशवर्द्धनः । वं च शं च वर्धयति । वंशश्च वर्धनश्च ॥ १०३ ॥

**भारभृत् कथितो योगी योगीशः सर्वकामदः ।**
**आश्रमः श्रमणः क्षामः सुपर्ण्णो वायुवाहनः ॥ १०४ ॥**

८५१. **भारभृत्–** विश्वभारं बिभर्तीति भारभृत् । भक्तरक्षणभारं च । अरा दोषाः अरभृतो जीवाः अनेन भान्तो भवन्ति । अरभृतो दुष्टान् भाति विनाशयतीति भारभृत् । भ विनाशने ॥

८५२. **कथितः–** ज्ञानिभिः कथितः । सर्वैः पदैः कथितः । सर्वोत्तमत्वेन सर्वशास्त्रेषु कथितः । मुख्यवृत्त्या कथितः । नानाविधाभिः कथाभिरितोऽवगत इति कथेत एव कथितः । ज्ञानिभिः कथ्यते चेयते च । के ब्रह्मणि वायौ च स्थितः कास्थित एव कथितः ॥

८५३. **योगी–** ज्ञानभक्त्यादयः सर्वेऽप्युपाया एतदर्था इत्ययं योगी । सर्वैर्गुणैः नित्ययोगी । युज्यन्ते इति योगा ज्ञानादयो गुणाः । तेऽस्य सन्तीति योगी । ध्यानयोगेन गम्यश्चायम् ॥

८५४. **योगीशः–** योगिनामुपायसिद्धानामीष्ट इति योगीशः । योगी चायमीशश्च । योगिनामिष्टं शमनेन ॥



८५५. **सर्वकामदः–** योगिनां भक्तानां सर्वकामदः । अभक्तानां सर्वान् कामान् द्यति च । सर्वश्चायं कामदश्च । सर्वेषां कं सुखमममज्ञानं च ददाति । सर्वन्ति नाशयन्ति संसारमिति सर्वा मुक्ताः । षर्व हिंसायाम् । तेषाममितं कं सुखं ददाति । ये हिंसकास्तामसाः तेषां कमा समन्तात् मं ज्ञानं च द्यति । सर्वका वा हिंसकाः । तेषाममममज्ञानं ददाति ॥

८५६. **आश्रमः–** आ समन्ताद् विश्रामन्त्यत्रेति आश्रमः । मुनीनामाश्रमस्थानगतस्तन्नामा । चतुराश्रमनियन्ता तद्गतस्तन्नामा । आश्रयन्तीत्याश्राः । तेषां मा ज्ञानमनेन । आ समन्तात् शं रं रमणं मा चानेन । आ समन्तादश्रमश्च ॥

८५७. **श्रमणः–** केषाञ्चित् श्रमं नयति, कांश्चिदपि श्रमयतीति श्रमणः । श्रमणान्तर्यामित्वाच्च श्रमणः ॥

८५८. **क्षामः–** द्वितीयं रूपम् । ४४५तममाद्यम् । प्रळये सर्वं क्षामयतीति क्षामः । अमितौ क्षौ कषौ आनंदश्रेष्टा चास्येति क्षामः । क्षमाया अयं स्वामी क्षामः । क्षः सर्वनिलयोऽमितश्च ॥

८५९. **सुपर्ण्णः–** द्वितीयं रूपम् । १९२तममाद्यम् । सुपूर्णत्वात् सुपर्णः । सुपरः परानन्दः । णः बलरूपश्च । सुखपानात् सुपः, वेदै रण्यते स्तूयत इति सुपर्णः । सुपैः मुक्तैः रण्यत इति वा सुपर्णः ॥

८६०. **वायुवाहनः–** द्वितीयं रूपम् । ३३२तमं प्रथमम् । वायुना सर्वं जगद् वाहयति निर्वाहयति चेति वायुवाहनः । वायुं वाहरूपमप्ययमेव अन्तःस्थित्वा प्रणयति । ओ वै शोषणे । वायति शोषयति जगदिति वायुः । वय गतौ । सर्वत्र गच्छतीति वायुः । वायुस्थत्वाच्च वायुः । वः ज्ञानरूपः । न हन्यत इत्यहनश्च ॥ १०४ ॥

**धनुर्द्धरो धनुर्वेदो दण्डो दमयिता दमः ।**
**अपराजितः सर्वसहो नियन्ता नियमो यमः ॥ १०५ ॥**

८६१. **धनुर्द्धरः–** शार्ङ्गं कोदण्डं वा धनुर्धरन् धनुर्धरः। सर्वधनुर्धरेषु गतः। 'धनुर्धरे धनुः' इति स्मरणात् धनव इति धनुष इति धनुर्धरा उच्यन्ते। तानप्ययं धरति। धन शब्दे। धनतीति धनुश्च धरश्च ॥

८६२. **धनुर्वेदः–** धनुर्वेदगतः। धनुर्विद्यां वेत्ति च वेदयति चेति धनुर्वेदः। धनुश्च वेदश्च ॥

८६३. **दण्डः–** दण्ड निपातने। दुष्टान् दण्डयतीति दण्डः। दण्डगत इति च दण्डः। दण्डो यमः। तन्नियन्ता। दण्डः सैन्यम्। तस्यापि नियन्ता। दं दातारं दमवन्तं वा प्रति डयते आकाशादवतीर्य पुरस्तिष्ठति गरुडवाहनोऽयं गजेन्द्रस्येव ॥

८६४. **दमयिता–** दण्डेन दुष्टदमनाद् दमयिता। दमेन यं ज्ञानमेषामिति दमयिनः। तांस्तारयतीति दमयिता ॥

८६५. **दमः–** इन्द्रियाणि दमयतीति दमः। ददाति प्रमामिति दमः। दण्डी मनुश्चेति दमः ॥

८६६. **अपराजितः–** द्वितीयं रूपम्। ७२०तमं प्रथमम्। अपरेऽप्यर्जुनादयोऽजिता अनेन। अश्च परैरजितश्च। भक्तिपराजितश्च। 'भक्तिवशः पुरुषः' इति श्रुतिः। अश्च परश्च। अजितश्च। अपरैरकारोपासकैराजितः। अथाप्यजितः। अपरैः शत्रुभिः सह आजिं गतः। आजिं तनोति वा देवानामर्थे ॥

८६७. **सर्वसहः–** सर्वं भक्तापराधं सहते। सर्वैरप्यनभिभवनीयः। सर्वश्च सहश्च। सारत्वाद्धानाच्च सश्च हश्च वा ॥

८६८. **नियन्ता–** सर्वस्यापि नियन्ता। केषाञ्चिन्नितान्तं यन्ता। अन्येषां निगृह्य यन्ता। परेषां नीचैर्यन्ता। अनिनां यन्ता वा ॥

८६९. **नियमः (अनियमः)–** द्वितीयं रूपम्। १६१तमं प्रथमम्। नितान्तं याति माति च। यं वायुमपि नितरां माति। निर्माति नाशयति च। यस्य मं ज्ञानमपि निखिलं यस्मात्। यमवन्तो यमाः। तेषु निहितो नियमः। स्वयं केनापि न नियम्यत इत्यनियमो वा ॥



८७०. **यमः (अयमः)–** द्वितीयं रूपम्। १६१तममाद्यम्।अहिंसादिभिर्गुणैः साधकं यमयतीति यमः। यश्चायं मश्च। नास्त्यन्योऽस्य यमयितेति अयमो वा। अयते माति च वा॥ १०५ ॥

**सत्ववान् सात्विकः सत्यः सत्यधर्म्मपरायणः।**
**अभिप्रायः प्रियार्होऽर्हप्रियकृत् प्रीतिवर्द्धनः ॥ १०६ ॥**

८७१. **सत्ववान्–** बलज्ञानसमाहारः सत्वम्। तद्वान् सत्ववान्। सत्वं जीवजातम्। नियम्यतया तद्वान्। सत्वं सत्वगुणः। पालनार्थं तदुपादानात् सत्ववान् सत्वस्वामी। निर्दोषत्वं सत्त्वम्। तद्वान् सत्त्ववान् ॥

८७२. **सात्विकः–** सत्वेषु जीवेषु स्थितः सात्विकः। विशेषतश्च सात्विकेषु स्थितः सात्विकः ॥

८७३. **सत्यः–** तृतीयं रूपम्। **२१२**तमं द्वितीयम्। **१०६**तमं प्रथमम्। सत्सु साधुः सत्यः। सद्गुणभरितः सत्यः। सत्यं जगदस्य निर्माणमिति सत्यः। यथार्थज्ञानपूर्विका कृतिः सत्यम्। तत्र गतः ॥

८७४. **सत्यधर्म्मपरायणः–** सत्यं धारयन्ति ये ते सत्यधर्माः भक्ताः। तेषामयं परमाश्रय इति सत्यधर्मपरायणः। सत्यं येषां धर्मस्ते सत्यधर्माणो वा। सत्यस्य जगतो धारकत्वात् सत्यधर्मो भगवान् परायणश्च सर्वेषाम्। सत्यश्च, धारकत्वाद् धर्मश्च, परायणश्च। सत्यधर्मपरश्च अयनश्च। सत्यं धर्म इति वायो रूपद्वयं च। तयोरयं परायणः ॥

८७५. **अभिप्रायः–** अभितः प्रकृष्टः अयः शुभावहं तत्वम्। अभितः गतत्वाच्च अभिप्रायः सर्वगतः। भक्तानां च महानयमायः। सर्वशास्त्रार्थत्वेन ज्ञानिभिरभिप्रेयते ॥

८७६. **प्रियार्हः–** सर्वं प्रियमर्हतीति प्रियार्हः। प्रियेष्वर्हतमः। प्रियश्च अर्हश्च प्रियार्हः। प्रियानर्हयति चायम् ॥

८७७. **अर्हप्रियकृत्–** अर्हाणामेव प्रियकृत्। अर्हश्च प्रियकृच्च। क्वचित् प्रियं कृन्तति चायम् ॥

८७८. **प्रीतिवर्द्धनः–** प्रीतिं अभिवर्धयति नाशयति चेति प्रीतिवर्धनः। प्रीत्या वराणाम्, प्रीतिं वरयतां वा धनं बाह्यमान्तरं च येन। ये प्रीत्या वृणते तेषां वा ॥ १०६ ॥

**विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।**
**रविर्विरोचनः सूर्य्यः सविता रविलोचनः ॥ १०७ ॥**

८७९. **विहायसगतिः–** विहायसो गतिर्व्याप्तिरनेनेति विहायसगतिः। विहायसं विहायः। विहायसवत् सर्वत्र गतिरस्येति। हृदयाकाशे अवगतिरस्येति च। विहायसे गणपतौ गतश्चायम्। 'विदुर्विहायसं व्योम पक्षिणश्च विहायसः' इति। तेन विहायस इति विहाया गरुडः। तेन विहायसे गगने गतिरस्येति च ॥

८८०. **ज्योतिः–** द्योतत इति ज्योतिः। ज्योतिषां ज्योतिः। 'द्युतेरिसिन्नादेश्च जः' इति हि दशपादिका। ज्योतिरित्यग्निः। ज्योतिरिति दिवाकरः। तत्र गतो ज्योतिः। ज्योतिरिति नेत्रम्। तत्र गतं ब्रह्म ज्योतिः। ज्योतींषि नक्षत्राणि। तत्र गतं ज्योतिः। प्रकाशरूपत्वाच्च ज्योतिः। 'ज्योतिरग्नौ दिवाकरे। पुमान्नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः'। भारहरणेन ज्याया भूमेरूतिश्चानेन। तदा त्विदन्तमिदं पदम् ॥

८८१. **सुरुचिः–** सुखेन रोचत इति। शोभना कान्तिरस्य। शोभना अभिरुचिरस्य। सुरुचिगतश्चायम् ॥

८८२. **हुतभुग्विभुः–** हुतभुजोऽपि विभुः। यज्ञेषु हुतं भुङ्क्ते इति हुतभुक्। इन्द्रियाग्निषु हुतं च। हुतभुजि गतस्तन्नामा। हुतभुक्, विभुश्च।



विविधो भवति, विशिष्टो भवति, विलक्षणो भवति, विभवतीति च विभुः। व्याप्तो भवतीति च। हुतभुजि गतो विभाति ॥

८८३. **रविः–**रवौ स्थितत्वाद् रविनामा। रु शब्दे। रौति रूयते रुवन्त्यनेनेति च रविः। रवैरीयत इति च रविः ॥

८८४. **विरोचनः–** विविधं रोचते, विलक्षणतया रोचते, विशिष्टो रोचत इति विरोचनः। विरोचनगतः बलिं जनयामास ॥

८८५. **सूर्यः–** सूर्यान्तर्गतः सूर्यः। सूरिभिरीयत इति सूर्यः। सूते जगदिति सूर्यः। सुष्ठूरीकरणाच्च सूर्यः। सरं यातीति च सूर्यः। 'सरतीति सूर्यः। सुवति प्रेरयति सर्वानिति सूर्यः' इति वैयाकरणाः। सूर्येऽर्कपर्णे स्थितश्च सूर्यः ॥

८८६. **सविता–** सूते जगदित्येव। सववन्तः सविनः, तानयं तारयति। सकारवाच्यः, विशिष्टस्तारयिता च। अधिकमुपरि (९६९) ॥

८८७. **रविलोचनः–** रविरस्य लोचनाज्जात इत्ययं रविलोचनः। रविजनकत्वात् रविनामकं लोचनमस्य। रविरस्य लोचने गतः। रौति च विरोचत इति विरोचनश्च। वौ गरुडे रोचते वा। सर्वं विलोचयत्यालोचयतीति च विलोचनः। रमानन्दरूपं विलक्षणं लोचनमस्य ॥ १०७ ॥

**अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ।**
**अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ १०८ ॥**

८८८. **अनन्तः–** द्वितीयं रूपम्। ६६३तमं प्रथमम्। नान्तोऽस्य गुणानामिति। अनन्ते शेषे गतश्चायमनन्तः। अनिति अन्तकश्च। अनमनतं तृणत्ति छिनत्तीत्यनन्तः ॥

८८९. **हुतभुग्भोक्ता–** हुतं पालयतीति हुतभुक्। सर्वं भुङ्क्ते भुनक्ति चेति भोक्ता। हुतभुजमपि भुनक्ति भुङ्क्ते च। हुतभुजि सन्निधाय हविषां

भोक्ता । हुतं भुक्त्वा यजमानं भुनक्ति । हुतभुजा द्वारेण याज्ञिकानां पालयिता । अन्ते हुतभुजैव मुखेन सर्वमत्ति । 'अनन्तहुतभुक्' इति क्वचित् पाठः ॥

८९०. **सुखदः–** द्वितीयं रूपम् । ४३१तममाद्यम् । सुखं निर्दुष्टं ज्ञानं ददाति द्यति चेति सुखदः । सु आनन्दं खं ज्ञानं च ददाति । सुखा निर्दुष्टज्ञाना निर्दुष्टज्ञानाश्च मुक्ताः । तेषामभीष्टं ददाति ॥

८९१. **नैकजः–** अनेकै रूपैरभिव्यज्यत इति नैकजः । अनन्तरूपः । नैकाः स्वतः परस्परं च भिन्ना अनन्ता जीवाः । ते जायन्तेऽनेन । 'नैकदः' इति च क्वचित् ॥

८९२. **अग्रजः–** सर्वस्मादग्रे वासुदेवाद्यात्मना जायत इति अग्रजः । अग्रजेषु स्थितस्तन्नामा ॥

८९३. **अनिर्विण्णः–** द्वितीयं रूपम् । ४३७तमं प्रथमम् । अनिभिः सह रमते । विन्नश्च तैः । अश्च निर्विण्णः सर्वलाभवान् पूर्णकामश्च । सर्वात्मना निश्चयेन विन्नो न भवति ॥

८९४. **सदामर्षी–** सतामपराधानां सदा मर्षणात् सदामर्षी । असत्सु सदा अमर्षवांश्चायम् । अमर्षिषु गतश्चायम् । सतः कृतापराधानपि आमर्षयति । मृष तितिक्षायाम् ॥

८९५. **लोकाधिष्ठानम्–** सर्वलोकानां मूलाधारः । लोक्यत्वाल्लोकश्चाधिष्ठानं च । सर्वलोकाधिकं स्थानमस्य । अनेन च ॥

८९६. **अद्भुतः–** अत्याश्चर्यतमः । अत्ति च भवति चेत्यद्भुतः । 'अदिभूभ्यां डुतच्' इति हि प्राचीनाः । 'अदि भुवो डुतच्' इत्यन्ये । अत्ति च भुवि ततश्च । भाशीलत्वाद् भुः । ततश्च । अन्ते जगदत्ति संहरतीति अत् शम्भुः । सोऽपि भवत्यस्मादिति अद्भुः । अत् सुखादनं भवत्यस्मादिति वा अद्भुः । तनोति च सर्वम् ॥ १०८ ॥



**सनात् सनातनतमः कपिलः कपिरप्ययः ।**
**स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुग् स्वस्तिदक्षिणः ॥ १०९ ॥**

८९७. **सनात्–** सनात् सनातनः । सनात् सनत् सनेत्येतानि नित्यवाचीनि पदानि । सना नित्यः सन्नत्ति जगत् ॥

८९८. **सनातनतमः–** अत एव सनातनतमः । सनातनेभ्यो कालाकाशादिभ्योऽपि महानयम् । कालाकाशयोरंशतो हि जननमिव । सनातनैरपि ताम्यते । तमु काङ्क्षायाम् ॥

८९९. **कपिलः–** कपिः सुखपानात्, सूर्ये स्थित्वा जलपानाद् वा, लाति च भक्तानिति कपिलः । लाति आदत्ते सर्वं जगत् प्रळयकाले स्वोदर इति वा । कं पिबतीति कपयो मुक्ताः । तान् लाति वा । कपिरिति ब्रह्मवायू । कपिरिति हनुमान् । तौ तं वा लाति । आनन्दरूपः पाता लाता वा । रामावतारे कपीन् लातीति वा ॥

९००. **कपिः–** कं पिबतीति कपिः । कपिषु सन्निहितः कपिनामा । विशिष्य च हनूमति सन्निहितं रूपम् । कं जलं पिबति सूर्यगतः । जलधिमग्नां भूमिं कात् जलात् वराहात्मा पाति च । कश्च पाति च ॥

**॥ इति नाम्नां नवमं शतकम् ॥**

९०१. **अप्ययः–** तमप्येति भुवनं साम्पराय इति अप्ययः । नास्ति पातेत्यपि अपालकं जगत् । अकारवाच्येन स्वेनैव पालितं च, अन्ते तमेव एतीति अप्ययः । स्वयमपिः पालकान्तररहितः । आश्रयश्च सर्वेषाम् । अपीत्यव्ययवाच्यत्वादपि, ज्ञानरूपत्वादयः । 'अव्ययः' इति क्वचित् ॥

९०२. **स्वस्तिदः–**भक्तानां सन्ततसौख्यदः । अभक्तानां सौख्यं द्यति च । शोभनां सत्तां ददाति द्यति च ॥

९०३. **स्वस्तिकृत्–** स्वस्ति शोभनां स्थितिं, शोभनं वा सुखं करोति च कृन्तति चेति स्वस्तिकृत् ॥

९०४. **स्वस्ति–** सन्ततानन्दरूपत्वात् स्वस्ति । सर्वदाऽस्तीति च ॥

९०५. **स्वस्तिभुग्–** सन्ततं स्वरूपानन्दं स्वयं भुङ्क्ते, भक्तानां च भुनक्तीति स्वस्तिभुक् । स्वानन्दं भुञ्जतेऽनेनेति च ॥

९०६. **स्वस्तिदक्षिणः–** स्वस्तये दक्षः स्वस्तिदक्षिणः । स्वानन्दरूपः, भक्तेषु दक्षिणश्च ॥ १०९ ॥

**अरौद्रः कुण्डली चक्री विक्रम्यूर्ज्जितशासनः ।**
**शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ११० ॥**

९०७. **अरौद्रः–** न कदाऽपि रौद्रो भवति । अथापि दुर्जनभर्जनकर्मणि नातोऽधिको रौद्रोऽस्ति । अकारेण चानेनान्ये रौद्रा भवन्ति । रौद्रौ रुद्रपुत्रौ स्कन्दविनायकौ कृष्णावतारे अकारवाच्यस्यास्य पुत्रौ प्रद्युम्नचारुदेष्णौ भवत इत्यरौद्रः । अरौ पुरोगते हन्तुं द्रवतीति अरौद्रः । रुद्रस्यायं कदाऽपि नियम्यो न भवतीत्यरौद्रः । अश्च, असतां रौद्रश्च ॥

९०८. **कुण्डली–** मकरकुण्डलवान् । कुण्डलिन्यहौ गतः कुण्डली । अग्निकुण्डे लीनः । जलकुण्डेषु च तीर्थगतः । महति च जलकुण्डे जलधौ गतः । योनिकुण्डे रेतोरूपेण लीनः ॥

९०९. **चक्री–** धृतसुदर्शनः । जगच्चक्रं, कालचक्रं वाऽस्य वशे । जीवेन समुच्चितो गर्भं क्रामति । अधिकमुपरि (९९५) ॥

९१०. **विक्रमी–** द्वितीयं रूपम् । पञ्चसप्ततमं प्रथमम् । अमितविक्रमः । विशिष्टपादविक्षेपवांश्च । विना गरुडेन, वौ वा क्रमते ॥

९११. **ऊर्ज्जितशासनः–** ऊर्ज बलप्राणनयोः । ऊर्जयतीति महाबलत्वादूर्जितः, सर्वचेष्टकत्वादूर्जितः । गुणैरूर्जितः । सर्वशासकश्च । सर्वदा ऊर्जितं



शासनमस्येति ऊर्जितशासनः । न कोऽप्यस्य शासनशब्दमत्येति । दुष्टेषु शं सुखं निरस्यति, सत्सु च अस्यति स्थिरीकरोतीति च शासनः । शंरूपौ वायुर्ब्रह्मा चास्याऽसनभूतौ । तेष्वयमास्ते । तांश्चायं प्रेरयतीति च । ऊर्जितानां शासनं सुखस्थानमनेनेति च ॥

९१२. **शब्दातिगः–** सर्वानपि शब्दानतीत्य गतोऽस्य महिमा । न शब्दैः शक्यमस्य गुणा वर्णयितुम् । अन्येषां विधिशब्दमयमत्येति ॥

९१३. **शब्दसहः–** अथापि भक्तानां विधिशब्दं सहते । सर्वेऽपि शब्दा एनमेव तात्पर्यतो वदन्तीति सर्वशब्दसहश्चायम् ॥

९१४. **शिशिरः–** तापत्रयेण तप्तानां शिशिरवत् शीतल इति शिशिरः । शिशिरर्तुगतश्च । शृणातेः किरजिति वैयाकरणाः । शीर्यन्ते शत्रूणां तेजांस्यत्र अनेन वेति शिशिरः ॥

९१५. **शर्वरीकरः–** शर्वरीं करोतीति शर्वरीकरः । निशा च शर्वरी । अविद्या च शर्वरी । शर्वरीकरे चन्द्रे गतः ॥ ११० ॥

**अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः ।**
**विद्वत्तमो वीतभयः पुण्यश्रवणकीर्त्तनः ॥ १११ ॥**

९१६. **अक्रूरः–** सौम्यः । अक्रूरे स्थितः । अक्रूरेषु च । अश्च । असत्सु क्रूरो निर्दयश्च । कृन्ततीति क्रूरः । कृतेः क्रू इत्यागमः, रक्प्रत्ययश्चेति वैयाकरणाः ॥

९१७. **पेशलः–** रमणीयः पेशलः । चतुरः पेशलः । पिश दीप्तौ । 'पिशति-दीप्तिकर्मा' इति हरदत्तः । 'पिश अवयवे, पिश समाधौ' इति च पठन्ति । पिंशतीति पेशः । पेशं लातीति पेशलः । पेशवान् वा । पे पालके शं लाति च । पाति च, ईशान् लाति च ॥

९१८. **दक्षः–** द्वितीयं रूपम् । ४२४तमं प्रथमम् । कर्तुमकर्तुमन्यथाकर्तुं समर्थो दक्षः । रमाया दक्षभागे स्थितत्वाद् दक्षः । दक्षगतस्तन्नामा दक्षः । दातृषु क्षियति निवसतीति दक्षः । क्षि निवासे ॥

९१९. **दक्षिणः–** सर्वत्र समदर्शित्वात् दक्षिणः । दक्षो वा दक्षिणः । दक्षश्चासाविनः । दक्षते भक्तानुग्रहाय धावतीति दक्षिणः । दक्षते दुष्ट-दमनायेति च दक्षिणः । दक्षते सर्वं जानातीति दक्षिणः । दक्ष गति-शासनयोः । दक्ष वृद्धौ शीघ्रार्थे च । दक्षभागे स्थित इनश्चायम् ॥

९२०. **क्षमिणांवरः–** क्षमावतां श्रेष्ठः क्षमिणां वरः । अपराधिष्वप्यक्रोधः क्षमा । क्षमिणां वरणीयः । षष्ठ्या अलुक् ॥

९२१. **विद्वत्तमः–** विद्वदुत्तमः । विद्वद्भिस्ताम्यते । विद्वांश्च तमनीयश्च ॥

९२२. **वीतभयः–** सर्वाधिकत्वात्, सर्वस्य तदधीनत्वात् वीतभयः । ये भगवतः सकाशात् वीताः दूरं गताः तेषां भयकृच्चायम् । वीतं च भक्तानां भयमनेन । वीतः गरुडारूढः गरुडध्वजो वा । भाति याति चेति भयः । विशिष्टैर्ज्ञानिभिरितश्च वीतः ॥

९२३. **पुण्यश्रवणकीर्त्तनः–** पुण्यं पवित्रं श्रवणं कीर्तनं चास्येति पुण्य-श्रवणकीर्तनः । ये परमपवित्रं भगवन्तं श्रुतवन्तस्ते पुण्यश्रवणाः । तैः कीर्तितोऽयमिति . पुण्यश्रवणकीर्तनः ॥ १११ ॥

**उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।**
**वीरहा रक्षणः सन्तो जीवनः पर्य्यवस्थितः ॥ ११२ ॥**

९२४. **उत्तारणः–** उत्तारयति भवजलधेः । उत्कृष्टश्चायं तारणः । उच्च तारश्च णश्च । उत्तारकानप्ययं नयति ॥

९२५. **दुष्कृतिहा–** भक्तानां दुष्कृतीः हन्तीति, दुष्कृतिनश्च दुष्टान् हन्तीति दुष्कृतिहा । दुष्टानां कृतीश्च हन्ति ॥



९२६. **पुण्यः–** द्वितीयं रूपम् । ६९१तमं प्रथमम् । पुण्यप्रदचरितत्वात् पुण्यः । पुण्यं सुकृतम् । तत्स्वामित्वात् पुण्यः । पुरुभिः ब्रह्मादिभिः पूर्ण इति अण्यते गण्यते वा । पुरुषेषु अग्रगण्यः पुण्यः ॥

९२७. **दुःस्वप्ननाशनः–** दुःस्वप्नान् नाशयति । दुष्टान् दुःस्वप्नेन नाशयतीति दुःस्वप्ननाशनः । दुष्टानां दुःस्वप्न इव । नाशकश्च तेषाम् ॥

९२८. **वीरहा–** तृतीयं रूपम् । ७४५तमं द्वितीयम् । १६६तमं प्रथमम् । सन्मार्गपरिपन्थिनो वीरान् हन्तेति वीरहा । ईरस्य समीरस्य वायोः ये विरोद्धारस्ते वीरास्तानयं हन्ति ॥

९२९. **रक्षणः–** ईरभक्तानां सतां रक्षणाद् रक्षणः । प्रतिक्षणं रमणाच्च । रक्षतीति रक्षः । णश्चायमानन्दबलरूपश्च ॥

९३०. **सन्तः–** सम्यक् ततः सन्तत एव सन्तः । सन्तनोतीति सन्तः । सत्सु ततश्च सन्तः । लोपः समाने इत्येकतकारलोपः । नेदं सत्पदस्य बहुवचनमिति भ्रमितव्यम् । जयन्तपदवद्रूपम् । सन्तः सन्तौ सन्ता इति । दुःषन्त इति यथा । रूपविशेषस्य हीदं नाम । तस्मादेकवचनतैव युक्ता ॥

९३१. **जीवनः–** जीवान् जीवयन् जीवनः । जीवान् नयन् वा जीवनः । जीवानां वनं जलं येन । जीववन एव जीवनः ॥

९३२. **पर्यवस्थितः–** परितः अवस्थितः पर्यवस्थितः सर्वगतः । दैवैः परिगतः, ज्ञानिभिरवगतः, हृदयगुहायां स्थितश्च ॥ ११२ ॥

**अनन्तरूपोऽनन्तश्रीर्ज्जितमन्युर्भयापहः ।**
**चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ ११३ ॥**

९३३. **अनन्तरूपः–** एकस्यापि अनन्तानि एकरूपाणि रूपाण्यस्येति अनन्तरूपः । तानि च गुणतः कालतः देशतः शक्तितश्चानन्तानि ।

अनन्तं विश्वमनन्तकालं रूपयतीति च अनन्तरूपः । अनन्तस्य बिम्बरूपः सन् अनन्ते शेषे स्थितः । अनन्तानां जीवानां बिम्ब-रूपः । 'रूपंरूपं प्रतिरूपो बभूव' इति हि श्रुतिः ॥

९३४. **अनन्तश्रीः–** अनन्ता श्रीः कान्तिरस्येति अनन्तश्रीः । अनन्ताः श्रियो वेदरूपा अस्येति अनन्तश्रीः । अनन्ता वै वेदाः । भगवतोऽनन्तरूपेषु श्रीरपि नित्यानपायिनी अनन्तरूपेति अनन्तश्रीः ॥

९३५. **जितमन्युः–** जितोऽनेन क्रोधरूपो मन्युः । भक्त्या जितः ज्ञानात्मक-मन्युरूपश्चायमिति जितमन्युः । यथा प्रह्लादभक्त्या जित इति मन्युमयं नृसिंहरूपमुपसञ्जहार ॥

९३६. **भयापहः–** भक्तानां भयमपहन्तीति भयापहः । भयमापयति हन्ति च नाशयति च । ये भयमापयन्ति तानयं हन्ति ॥

९३७. **चतुरश्रः–** सर्वात्मना सर्वव्यापारेषु चतुरश्रः सुसङ्गतः । चतुरश्रेषु पदार्थेषु गतः । चतुरः श्रापयति श्रापयति खेदयति वा । द्रौपदीवस्त्राप-हारे चतुर्णामेव न स्रावयत्यास्रम्, दुर्योधनस्य दुःशासनस्य कर्णस्य शकुनेश्च । 'चतुर्णामेव पापानामास्रं न पतितं तदा' इति स्मर-णात् । चतुर्विधान्याश्राणि भवन्त्यनेन । दुःखे चाऽनन्दे च दुःख-नटने चाऽनन्दनटने च । तृतीयोऽतिशये ॥

९३८. **गभीरात्मा–** अगाधमस्य स्वरूपमिति गभीरात्मा । गभीर इत्यगाध उच्यते । अचल उच्यते । गतभियां रमणश्चायमन्तरात्मा ॥

९३९. **विदिशः–** गुरुषु स्थित्वा विनेयानां विविधमुपदिशन् विदिशः । असुराणां विरुद्धं च दिशन् । स्वयं विगतदेशिकः ॥

९४०. **व्यादिशः–** राजादिषु स्थित्वा विविधमादिशन् व्यादिशः । अज्ञानिनां व्याख्याय दिशन् व्यादिशः । अयोग्यानां विरुद्धमादिशन् व्यादिशः ॥

९४१. **दिशः–** सर्वेषां तत्तद्योग्यं सर्वं दिशन् दिशः । दिक्षु सर्वासु एक एव सन्निहित इति च दिशः । एकवचनांतमेव चेदम् ॥ **११३** ॥



**अनादिर्भूर्भुवोलक्ष्मीः सुवीरो रुचिराङ्गदः ।**
**जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ ११४ ॥**

९४२. **अनादिः–** नास्त्यस्याऽदिः । नास्त्यस्य कारणम् । अनस्याप्यादि-रयम् । अनः सर्वचेष्टकश्चायमादिश्चायम् । अश्चायम्, नादिरनादिश्चा-यम् । नश्चाऽदिश्च वा । नेतिनेति सर्वनिषेधगोचरत्वान्नः । 'धियो यो नः' इति बुद्धरूपो न इत्युक्तो हि गायत्र्याम् ॥

९४३. **भूर्भुवोलक्ष्मीः–** भूर्लोकस्य भुवोलोकस्य च शोभाकरोऽयं समृद्धि-करोऽयमिति भूर्भुवोलक्ष्मीः । पूर्णत्वाद् भूः । भूतिवरत्वाद् भुवः । लक्ष्मीगतत्वात् तन्नामा । लक्ष्माणीयर्तीति च लक्ष्मीः ॥

९४४. **सुवीरः–** शोभनोऽयं वीरः । सुखरूपोऽयं वीरयतीति पराक्रमशाली च । विं गरुडं ईरयति प्रेरयतीति च वीरः । सुखविशिष्टः प्रेरकश्च । समीचीनः विशिष्टश्च ईरः समीरोऽप्यनेन ॥

९४५. **रुचिराङ्गदः–** रुचिरे अङ्गदे अस्येति रुचिराङ्गदः । केषाञ्चिद् रुचिरमङ्गं ददाति । केषाञ्चिद् रुचिरमङ्गं द्यति । रुचिरश्च प्राणिनामङ्गदश्च । अङ्गदे कपौ गतश्चायमङ्गदनामा । अङ्गदेषु गतश्च ॥

९४६. **जननः–** जगतां जननः जनकः । जनान् नयतीति जननः । न जायत इति जनः, नयति च सर्वम् । जनं जननं नयति च ॥

९४७. **जनजन्मादिः–** स्वयं न जायत इति जनः । अन्येषां जन्मनः अयमेव आदिः कारणम् । जनानां वा जन्म येन स जनजन्मा । अत एवाऽदिश्च सर्वेषाम् ॥

९४८. **भीमः–** द्वितीयं रूपम् । **३५८**तममाद्यम् । भीमान्तर्यामी भीमः । 'भीमोऽतिपापेषु दुरन्तवीर्यः' । शत्रुभयङ्करत्वाद् भीमः । भीः मा इति प्रत्याययन्नभयदो भीमः । भियं माति निर्माति, नाशयति चेति भीमः ॥

९४९. **भीमपराक्रमः–** भीमश्चास्य पराक्रम इति भीमपराक्रमः । भीमपरः स्वयं शत्रूनाक्रमते । लोकक्रमविलक्षणत्वादक्रमश्चायम् । भीमः सन् परानाक्रमते वा । भीमस्याप्यनेन पराक्रम इति च ॥ ११४ ॥

**आधारनिलयो धाता पुष्पहासः प्रजागरः ।**
**ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ ११५ ॥**

९५०. **आधारनिलयः–** जगदाधाराणां देवानामपि निलयः । जगदाधारस्य वायोरपि निलयः । जगदाधारो वायुरस्य निलयः । आधारश्च निलयश्च । आ समन्ताद् धारा यत्र स आधारो जलपातः । तस्य निलयः ॥

९५१. **धाता (अधाता) –** द्वितीयं रूपम् । त्रिचत्वारिंशं प्रथमम् । धारकत्वाद् धाता । शुभस्य धयनात् पानाद्वा धाता । धेट् पाने । धातरि गतश्च तन्नामा । नान्यो धाताऽस्येत्यधाता वा । अधिको वा धाता ॥

९५२. **पुष्पहासः–** मुखपद्मे पुनरपरं विकसितं पुष्पमिवास्य हासः । गुणपुष्टः हासोऽस्य । भक्तपुष्टिकरः हासोऽस्य । पुष्यति पाति च हासोऽस्येति पुष्पहासः ॥

९५३. **प्रजागरः–** नित्यं जागृत इति प्रजागरः । प्रळये प्रजानां गरणाच्च । प्रजासु गतो रमते च । प्रजासु अगेषु अचरेषु च रमते ॥

९५४. **ऊर्ध्वगः–** ऊर्ध्वे गतः सहस्रारे गतः । ऊर्ध्वेषु देवादिषु गतः । ऊर्ध्वे सर्वत उपरि गतः । ऊर्ध्वं च गत इति ऊर्ध्वगः । पुण्यकृतः ऊर्ध्वं गमयति । ऊर्ध्वः सर्वोच्च इति शास्त्रैः ज्ञानिभिरवगतः ॥

९५५. **सत्पथाचारः–** सतां, सन् वा पन्थाः सत्पथम् । सत्पथं नारायणाद्यात्मना स्वयमाचरति, ऋषिषु स्थित्वा आचारयतीति सत्पथाचारः । सत्पथाः साधवस्तैराचर्यते अनुष्ठीयते उपास्यत इति सत्पथाचारः । अयं सन्, मोक्षगामिनां पन्थाश्च । आ समन्तात् चारयति कालचक्रमिति च



सत्पथाचारः । सतः सता पथा चारयतीति च । स्वयं सतां पन्थाः । आचारगतश्च तेषाम् ॥

९५६. **प्राणदः–** चतुर्थं रूपम् । ४०९तमं तृतीयम् । ३२२तमं द्वितीयम् । पञ्चषष्टममाद्यम् । प्राणानिन्द्रियाणि ददाति द्यति चेति प्राणदः । प्रकृष्टश्चाणदश्च । प्र चाणश्च दश्चेति च । प्राणं चेष्टां ददाति । प्राणं प्रकृष्टानन्दं ददाति । प्रकृष्टबलं वा । मृतो जातः परीक्षित् । तस्य च कृष्णरूपेण प्राणं ददौ ॥

९५७. **प्रणवः–** द्वितीयं रूपम् । ४१०तमं प्रथमम् । प्रणवे वाच्यतया स्थितः प्रणवः । सर्वे प्रणमन्त्येनमिति प्रणवः । सर्वैः प्रणूयत इति प्रणवः । सर्वो वेदः यस्य प्रकृष्टो नवः स्तुतिः ॥

९५८. **पणः–** सर्वव्यवहारकरत्वात् पणः । ईश्वरं पणं कृत्वा सज्जनाः प्रतिजानत इति च पणः । पातृत्वात् पः, आनन्दरूपत्वाण्ण इति चायं पणः । पालकानां णश्च बलं चानेनेत्ययं पणः । पिबत्यानन्दमिति च पणः । सर्ववस्तूनां वेदशब्देभ्य एव नामदानेन सर्वव्यवहारहेतुत्वाच्च पणः । सर्वैरपि पदैः भगवानेव पण्यते व्यवह्रियते वेदज्ञैरिति च पणः ॥ ११५ ॥

**प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः ।**
**तत्वं तत्वविदेकात्मा जन्ममृत्युजरातिगः ॥ ११६ ॥**

९५९. **प्रमाणम्–** द्वितीयं रूपम् । ४२९तममाद्यम् प्रकृष्टज्ञानरूपत्वात् प्रमाणम् । प्रमां नयतीति च । प्रकर्षेण मां रमां चेष्टयतीति च । प्रकृष्टौ माणौ ज्ञानानन्दावस्येति अनेनेति च प्रमाणम् । सर्वप्रमाणगतत्वात् स्त्रीपुन्दोषविहीनत्वाच्च प्रमाणम् ॥

९६०. **प्राणनिलयः–**प्राणस्य, प्राणानां वा निलयः । प्राणश्चास्य निलयः । प्राणश्च निलयश्चेति च प्राणनिलयः ॥

९६१. **प्राणभृत्–**प्राणं बिभर्ति । प्राणांश्च बिभर्ति । ‘प्राणधृत्’ इति क्वचित् ॥

९६२. **प्राणजीवनः–**प्राणेन जीवयति । प्राणैः जीवयति । प्राणं जीवयति । प्राणश्च जीवनश्चेति प्राणजीवनः ॥

९६३. **तत्वम्–** सर्वेषामुपास्यं परमं तत्वम् । ततं वं ज्ञानरूपं च ॥

९६४. **तत्ववित्–** तत्वं तथ्यमात्मानं, यथार्थं च जगदीदृशं वेत्तीति तत्व-वित् । तत्वं विदन्त्यनेनेति च ॥

९६५. **एकात्मा–** एक एवायमात्मा स्वामी अन्तर्यामी सर्वस्य । नास्य कश्चित् । एकः प्रधान आत्मा । एष एव करोतीति एकः सर्वकर्ता, अत्तीति आत्मा सर्वसंहर्ता ॥

९६६. **जन्ममृत्युजरातिगः–** अप्राकृतशरीरत्वात् जन्ममृत्युजरादीनतिगतः । जन्मादीनतिगच्छन्ति चानेन । जन्मादीनतिशयेन गच्छन्ति चानेन, अतितरां गमयति चायम् ॥ ११६ ॥

**भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।**
**यज्ञो यज्ञपतिर्य्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ ११७ ॥**

९६७. **भूर्भुवःस्वस्तरुः–** लोकत्रयस्यापि कल्पवृक्ष इवायमभीष्टप्रदः । लोक-त्रयमपि तरति अतिगच्छतीति च तरुः । तरन्त्यनेनेति च तरुः । पूर्णत्वाद् भूः । भूतिवरत्वाद् भुवः । अनन्तसुखत्वाद् सुबलरूपत्वात् स्वः । स्वरमणत्वाच्च स्वः । तरुगतस्तरुनामा ॥

९६८. **तारः–**द्वितीयं रूपम् । ३३९तमं प्रथमम् । अत एव तारयतीति तारः । ततत्वात् तः । आरमणादारः । सर्वत्र ततां रमां रमयति च । तश्चायमश्चायं रश्च ॥

९६९. **सविता–** द्वितीयं रूपम् । ८८६तमं प्रथमम् । सवितरि स्थितस्त-न्नामा । सर्वस्य प्रसविता सविता ॥

९७०. **प्रपितामहः–** प्रपितामहे स्थितः । प्रकृष्टः पितामहादपि । ब्रह्मणः पिता । शिवस्य पितामहः । इन्द्रादिप्रपितामहः ॥



९७१. **यज्ञः–** द्वितीयं रूपम् । ४४७तममाद्यम् । इज्यत इति यज्ञः । यदस्ति तज्जानातीति यज्ञः । यज्ञान्तर्गत इति यज्ञः । यानात् ज्ञानाद्वा यज्ञः । यज्ञो वै विष्णुः । यस्माद् ब्रह्मादीनां ज्ञानस्फूर्तिः स यज्ञः ॥

९७२. **यज्ञपतिः–** यज्ञेशत्वात् यज्ञपतिः । यज्ञाराध्यानामपि पतिः । यज्ञश्चायं पतिश्च । यज्ञपानां तिरानन्दोऽनेन ॥

९७३. **यज्वा–** यज्वान्तर्गतत्वाद् यज्वा । तदर्थं यज्ञं वाति यजुर्वातीति च यज्वा । यजनैर्वीयते ज्ञायत इति च ॥

९७४. **यज्ञाङ्गः–** वराहरूपे यज्ञा अङ्गेष्वस्येति यज्ञाङ्गः । यज्ञाश्च अस्य आराधनाङ्गानि । यज्ञानङ्गति गच्छत्ययम् ॥

९७५. **यज्ञवाहनः–** कर्मणा ज्ञानेन वा यज्ञेन वाहनेनायं यजमानमुपगच्छतीति यज्ञवाहनः । यज्ञो वाहनमस्येति । यज्ञं निर्वाहयति चायम् । यज्ञवा-हमग्निं नयति चायम् ॥ ११७ ॥

**यज्ञभृद् यज्ञकृद् यज्ञी यज्ञभुग् यज्ञसाधनः ।**
**यज्ञान्तकृद् यज्ञगुह्यमन्नमन्नाद एव च ॥ ११८ ॥**

९७६. **यज्ञभृद्–**यज्ञं बिभर्तीति यज्ञभृत् । स्वात्मानं च स्वयमेव बिभर्ति । यज्ञमिन्द्रं बिभर्ति । यज्ञनामानमिन्द्रपुत्रं बिभर्ति ॥

९७७. **यज्ञकृद्–** यज्ञं करोति कारयति च । यज्ञमज्ञानां कृन्तति ॥

९७८. **यज्ञी–** सर्वे यज्ञा अस्यैवेति यज्ञी यज्ञस्वामी । यकारं भगवन्तं जानन्तीति यज्ञाः । तेषामयं स्वामी यज्ञी ॥

९७९. **यज्ञभुक्–** यज्ञं भुङ्क्ते भुनक्ति चेति यज्ञभुक् । यज्ञान् भगवज्ज्ञान् पालयति चायम् ॥

९८०. **यज्ञसाधनः–** यज्ञं साधयतीति यज्ञसाधनः । यज्ञश्चास्य प्राप्तिसाधनमिति यज्ञसाधनः । यज्ञश्च साधनश्च ॥

९८१. **यज्ञान्तकृत्–** यज्ञस्यान्तं निर्णयं करोतीति यज्ञान्तकृत् । दक्षादीनां यज्ञस्य नाशं च कुर्वन् यज्ञान्तकृत् । यज्ञस्यान्तः पूर्तिः । तं च कुर्वन् । यज्ञश्चान्तकृच्च ॥

९८२. **यज्ञगुह्यम्–** सर्वयज्ञानामयमेव परमाराध्यं गुह्यमिति यज्ञगुह्यम् । यज्ञश्चायम् । गुह्यं चायम् ॥

९८३. **अन्नम्–** अद्यते उपजीव्यते भूतैः, अत्ति च भूतानीत्यन्नम् । अन्नगतत्वादन्नमानिनि ब्रह्मणि गतत्वाच्चान्नम् । अन्नदेवतायां रमायां गतत्वाच्च । अतिनादाच्चान्नम् ॥

९८४. **अन्नादः–** अपि चेदं विचित्रम् । लोके तावदचेतनमन्नं भवति । अन्नादश्चेतनः । अयं पुनरन्नाद एव सन्नन्नं च भवति । अन्नमेव च सन्नन्नादोऽपि भवति । तदिदम् 'एवच' इत्यव्ययद्वयेन विस्मापयति । अन्यव्यवच्छेदः, अन्यसमुच्चयश्च किल एवचयोरर्थः । तं च विरोधसमावेशं भगवति दर्शयत्यनेन । अन्नभूतं जगदत्तीति अन्नादः । अन्नभूता रमा लीलया तया सुखादनमस्येति च । रमैवान्नम्, अयमन्नाद इति अपूर्वं दाम्पत्यं चानुसन्धापयति ॥ ११८ ॥

**आत्मयोनिः स्वयञ्जातो वैखानः सामगायनः ।**
**देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ ११९ ॥**

९८५. **आत्मयोनिः–** आत्मयोनौ चतुर्मुखे गत आत्मयोनिः । आत्मनश्चतुर्मुखस्य वायोर्वा योनिश्च । आत्मैव स्वस्य योनिरित्यात्मयोनिः । आत्मनां चायं जन्मस्थितिप्रळयमोक्षयोनिः । आत्मा चायं योनिश्च ॥

९८६. **स्वयञ्जातः–**अत एव स्वयं जातः । नान्येन केनापि पित्रादिना जायते । स्वयमिति स्वतन्त्रः । अथापि स्वेच्छया वसुदेवादिषु जातश्च । स्वयं जायते, अतस्ततश्च सर्वत्र ॥



९८७. **वैखानः–** अविद्याकामकर्माणि विखनन्तीति विखनाः तत्वज्ञानिनः । तेषामयं वैखानः । विखनन्ति अवदारयन्ति संसारमिति विखना मुक्ताः । तेषामयं स्वामी । शत्रूणामवदारणाद् वैखाना वीराः । तेषामयं वैखानः । स वै बलं बलिनाम् । विखननवान् वैखानः । भूमिं विखन्य पाताळोदरगतानसुरान् जघानेति । संसारदुःखविखननाच्च वैखानः । 'वै' इत्यव्ययवाच्यः । ज्ञानरूपत्वात् खम् । अननाच्चानः ॥

९८८. **सामगायनः–** साम गायतीति, सामभिर्गीयते चेति सामगायनः । समत्वात् साम चायं गायनश्च । सामगानामयनश्च । सामगश्च अयनश्च ॥

९८९. **देवकीनन्दनः–** देवकीं नन्दयन् देवकीनन्दनः । आनन्दरूपो भगवान् देवकः । देवकस्य स्त्री रमैव देवकी । तां सदा नंदयन् देवकीनन्दनः । देवानां कात्कारात् देवकिनो दैत्याः । 'देवकात्कारात् दैत्या देवकिनो मताः' इति नरहरितीर्थाः । देवकिनां इं इच्छां नन्दं आनन्दं च नयत्यपनयतीति देवकीनन्दनः । देवाः किनः आनन्दिनोऽनेनेति देवकी । इः कामः नन्दनोऽस्येति इनन्दनः । स चासौ स चेति देवकीनन्दनः । देवानां ज्ञानिनां कं सुखं यस्याः सा देवका वेदवाक् । देवकैव देवकी । तृतीयोऽतिशये । तां नन्दयतीति च देवकीनन्दनः । देवानां ब्रह्मादीनामपि कमिन्द्रियं मनो नियम्यत्वेनास्तीति देवकी भगवान् । ईः लक्ष्मीः । तामपि नन्दयन् ईनन्दनः । तेन च देवकीनन्दनः ॥

९९०. **स्रष्टा–** द्वितीयं रूपम् । ५९३तममाद्यम् । स्रष्टरि ब्रह्मणि गतः । ब्रह्मणः स्रष्टा । नित्यानामपि पराधीनविशेषाधानेन स्रष्टा ॥

९९१. **क्षितीशः–** क्षितेरीशः क्षितीशः । सर्वं क्षिणोतीति क्षितिः । सर्वस्य निलयनं वा । सर्वस्येष्ट इतीशः ॥

९९२. **पापनाशनः–** पापानि पापांश्च नाशयन् पापनाशनः । पाति अपालकान् नाशयति च । कांश्चित् पाति । कांश्चिन्न पाति नाशयति च । पश्चापगतनाशश्च ॥ ११९ ॥

**शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।**
**रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १२० ॥**
**॥ सर्वप्रहरणायुधों नम इति ॥**

९९३. **शङ्खभृत्–** पापनाशनार्थानि चास्यायुधानीत्युपसंहरति शंखभृदित्यादिना । शङ्खं रमात्मकं बिभ्रत् शङ्खभृत् । शमानन्दं खं ज्ञानं च बिभर्तीति च । 'कं ब्रह्म खं ब्रह्म' इति हि श्रुतिः । ज्ञानानन्ददानेन भक्तान् बिभर्ति च ॥

९९४. **नन्दकी–** रमैव नन्दकाख्यः खड्गोऽस्येति नन्दकी । नन्दगोपः की सुखी येन । ये नन्दन्ति ते नन्दा मुक्ताः किनः सुखिनो येन । शतानन्दत्वान्नन्दः को ब्रह्मा । स चास्त्यस्य पुत्रत्वेन । नन्दः शतानन्दो ब्रह्मा, को वायुर्वा । तावस्य पुत्राविति नन्दकी । सृष्टिविस्तारेण नन्दयन् को दक्षोऽस्य सृष्टयङ्गमिति च । येये जगति नन्दकास्तेष्वयं सन्निहितः । जगदानन्दयतीति नन्दः । कं सुखमस्यास्तीति की चायमिति नन्दकी ॥

९९५. **चक्री–**द्वितीयं रूपम् । ९०९तमं प्रथमम् । दुर्गैव चक्रमस्येति चक्री । कालचक्रनियमनाच्च । चङ्क्रम्यन्त इति चक्राणि रूपाण्यस्य ॥

९९६. **शार्ङ्गधन्वा–** शार्ङ्गं धनुरपि रमैव रूपान्तरेणेति शार्ङ्गधन्वा । धन्वा मरुभूमिरपि वृक्षसमृद्धया शृङ्गवानिव येन ॥

९९७. **गदाधरः–** गदां पवमानात्मिकां धरन् गदाधरः । गदमनुजं प्रीत्याऽऽधरतीति गदाधरः । अथच ये गदन्ति ते गदाः । वेदाश्च ज्ञानिनश्च । तेषामयमाधारः । संसाराख्यं गदमधरयतीति च गदाधरः ॥



९९८. **रथाङ्गपाणिः–** दुष्टप्रहाणाय चक्रमुक्तम् । इदानीं धर्मचक्रमाह- रथाङ्गपाणिः । रथस्य रतस्य रतेः सुखस्येत्येतत्, अङ्गं सुखसाधनं चक्रमस्य पाणाविति रथाङ्गपाणिः । रथस्य वाहनस्य गरुडस्याङ्गे पाणिर्यस्य ॥

९९९. **अक्षोभ्यः–** द्वितीयं रूपम् । ८०५तमं प्रथमम् । यस्य भक्ता अप्यक्षोभ्याः, यानयं शंखचक्रादिभी रक्षति स किमक्षोभ्य इति वक्तव्यम्? अश्च । जगतः क्षोभं यापयतीति क्षोभ्यश्च । अक्षोभान् दृढचित्तान् यातीति अक्षोभ्यः ॥

१०००. **सर्वप्रहरणायुधः–** किमिदमिदमिति नामग्रहणेन । सर्वदुष्टनिबर्हणाय, सर्वदोषनिबर्हणाय च सर्वमपि दोषप्रहरणसाधनमायुधमेवास्येति सर्वप्रहरणायुधः । चक्षुषाऽनुजिघृक्षेत् । चक्षुषैव जिहीर्षेत् । यस्य संहारोऽप्यनुग्रहात्मकः ॥

अन्ते पुनरोङ्कारेण सम्पुटीकरोति सर्वप्रहरणायुधों नम इति । 'प्रणवष्टेः' । तेन सर्वप्रहरणायुध इत्यत्र विसर्गोपेतस्याकारस्य लोपे तत्स्थाने प्रणवादेशे सर्वप्रहरणायुधों इति भवति । ओंकारवाच्यस्य नारायणस्येति सहस्रं नामान्युदितानीति इतिकरणेन नामानि च स्तोत्रं च समापयति ॥ १२० ॥

**॥ इति नाम्नां दशमं शतकम् ॥**

**इतीदं कीर्त्तनीयस्य केशवस्य महात्मनः ।**
**नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्त्तितम् ॥ १२१ ॥**

अथातः फलवाक्यानि भवन्ति । दिव्यानां जप्येषूत्तमानाम् । प्रत्येकं शतार्थत्वात् । अशेषेण प्रकीर्तितम् । नापि वक्तव्यमवशिष्यते, नाप्युक्तमतिरिच्यत इत्यर्थः ॥ १२१ ॥

**य इदं शृणुयान्नित्यं यश्चापि परिकीर्त्तयेत् ।**
**नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः ॥ १२२ ॥**

यः शृणुयात्, यश्च परिकीर्तयेत्, यश्च शृणुयादपि परिकीर्तयेदपि । ज्ञानिभिरर्थश्रवणं श्रवणम् । अर्थं परिज्ञाय कीर्तनं परिकीर्तनम् । मानवः मननशीलः साधकः ॥ १२२ ॥

**वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।**
**वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ १२३ ॥**

यो ब्राह्मणः शृणुयात् परकीर्तयेद्वा स वेदान्तजलधिपारगः स्यादित्यादि । वेदानामन्तं निर्णयं वा पारं वा गच्छतीति वा । सर्वं सर्वेषां भवति । इदं तु विशिष्टं फलम् । प्रायो दुःखरहितं सांसारिकं सुखं सुखम् ॥ १२३ ॥

**धर्म्मार्त्थी प्राप्नुयाद् धर्म्ममर्त्थार्त्थी चार्त्थमाप्नुयात् ।**
**कामानवाप्नुयात् कामी प्रजार्त्थी चाऽप्नुयात् प्रजाम् ॥ १२४ ॥**

यो येनार्थी तदपि तस्य भवेदेवेत्याह– धर्मार्थी । यद्वर्णोऽपि स्यात् । प्रकृष्टो जायतेऽनयेति प्रजा भगवत्प्रज्ञा । तेन च मोक्ष इति पुरुषार्थचतुष्टय-पर्यन्तत्वमस्योक्तं भवति ॥ १२४ ॥

**भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।**
**सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्त्तयेत् ॥ १२५ ॥**

सदोत्थानशीलः पठेत् । विशिष्य च प्रातरुत्थाय पठेत् । तद्गतमानसत्वादेव शुचिः । कृतशौचो वा ॥ १२५ ॥

**यशः प्राप्नोति विपुलं याति प्राधान्यमेव च ।**
**अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ १२६ ॥**

'ज्ञातिप्राधान्यमेव च' इति क्वचित् । अचलामनपायिनीम् । अनुत्तमं श्रेयः मोक्षम् । मोक्षसाधनं भगवदनुग्रहं ज्ञानभक्तिवैराग्यानि च ॥ १२६ ॥



**न भयं क्वचिदाप्नोति वीर्य्यं तेजश्च विन्दति ।**
**भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ १२७ ॥**

अध्ययनजं वीर्यं पराभिभवनशक्तिम्, तेजः परैरनभिभाव्यत्वं च । अरोगता-जन्या द्युतिः । बलं दैहिकं मानसं च । गुणाः अनहंकारादयः । अहंकारो हि सर्वान् गुणान् ग्रसति ॥ १२७ ॥

**रोगार्त्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।**
**भयान्मुच्येत भीतस्तु मुच्येताऽपन्न आपदः ॥ १२८ ॥**

न भयं परस्तादाप्नोति । यदि पूर्वमेव भीतः मुच्येत भयात् । किमस्मादस्मादिति विशिष्य कथनेन । सर्वस्या अप्यापदः मुच्येतैव ॥ १२८ ॥

**दुर्ग्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।**
**स्तुवन् नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १२९ ॥**

दुर्गाणि दुरितानि । दुस्तराणि च व्यसनान्यापदश्च । पुरुषः पुरुषोत्तमं स्तुवन् । तेनोत्तमत्वज्ञानं च पठनाङ्गमित्याह । तदभावे सोऽहंभावे च व्यर्थं विपरीतफलं च पठनमिति बोधयति करुणया ॥ १२९ ॥

**वासुदेवाश्रयो मर्त्त्यो वासुदेवपरायणः ।**
**सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १३० ॥**

तदेव स्फुटं सतात्पर्यमुच्यते– यो वासुदेवं सर्वात्मना आश्रितः, यस्य च हृदयं वासुदेवस्याऽश्रयः । यस्य वासुदेव एव परायणः परमाश्रयः, परमा गतिः, परं ज्ञेयं च । स वासुदेवात्मकं ब्रह्म याति ॥ १३० ॥

**न वासुदेवभक्तनामशुभं विद्यते क्वचित् ।**
**जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ १३१ ॥**

अशुभं शृङ्गग्राहिकया दर्शयति– जन्ममृत्युजराव्याधिमयं संसारभयमिति । विद्यते उत्पद्यते । तदाह– नैवोपजायते ॥ १३१ ॥

**इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।**
**युज्येताऽत्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्त्तिभिः ॥ १३२ ॥**

नामार्थमननेन अधीयानः । गुरुमुखेन स्वयमेव वा । अत्रोक्तमस्तीति श्रद्धा । भगवति परा भक्तिः । गुरौ च यथायोगम् । आत्मसुखं स्वरूप-सुखम् । 'युज्येताऽत्मा' इति केचित् । अपराधिष्वप्यक्रोधः क्षान्तिः, श्रीः ज्ञानवित्तम्, भगवान् रक्षत्येवेति धृतिः, निरन्तरा भगवत्स्मृतिः, भगवत्कीर्तनं च कीर्तिः । अन्यदपि यथायोगमिष्यते ॥ १३२ ॥

**नक्रोधो नचमात्सर्य्यं नलोभो नाशुभा मतिः ।**
**भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३३ ॥**

अक्रोधादयो गुणा भक्तानां भवन्ति । क्रोधादयो न भवन्ति वा । नञ आवृत्तिरवधारणार्था भवतीति प्राचीनानां सम्प्रदायः ॥ १३३ ॥

**द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्म्महोदधिः ।**
**वासुदेवस्य वीर्य्येण विधृतानि महात्मनः ॥ १३४ ॥**

द्यौः खं दिशो भूर्महोदधिरित्यादीनि सर्वाणि विधृतानि । 'सचन्द्रार्कनक्षत्रं खम्' इति क्वचित् ॥ १३४ ॥

**ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।**
**जगद् वशे वर्त्ततेदं कृष्णस्य सचराचरम् ॥ १३५ ॥**

वर्तते इदम् । लोपशि पुनः सन्धिः । वर्तते अदमिति वा । अन्ते कृष्णस्यैव अदं अदनीयम् ॥ १३५ ॥

**इन्द्रियाणि मनो बुद्धिः सत्वं तेजो बलं धृतिः ।**
**वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १३६ ॥**



पूर्वार्धं क्षेत्रविस्तारः । तान्येतानि सर्वाणि वासुदेवात्मकानि वासुदेवस्वामि-कानि । एतत्समष्टिरूपं क्षेत्रं शरीरं च वासुदेवात्मकम् । वासुदेव एव च स्वयं क्षेत्रज्ञः सन् अत्र वसति । अमुख्यवृत्त्या क्षेत्रज्ञ इति जीवो वा निगद्यते ॥ १३६ ॥

**सर्वागमानामाचारः प्रथमं परिकल्प्यते ।**
**आचरप्रभवो धर्म्मो धर्म्मस्य प्रभुरच्युतः ॥ १३७ ॥**

साध्वाचरणमाचारः । 'प्रथमं परिकल्पितः' इति क्वचित् ॥ १३७ ॥

**ऋषयः पितरो देवा महाभूतानि धातवः ।**
**जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १३८ ॥**

सप्त धातवः । सर्वे च धारणहेतवः ॥ १३८ ॥

**योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादिकर्म्म च ।**
**वेदाः शास्त्राणि विज्ञानमेतत् सर्वं जनार्दनात् ॥ १३९ ॥**

कर्मयोगः, भक्तियोगो वा । देवानां तरतमज्ञानम् । 'योगज्ञानम्' इति केचित् । भूतभौतिकज्ञानं वा । आत्मतत्वज्ञानं साङ्ख्यम् । विद्याः कला-विद्याः । वेदाङ्गानि च । ज्ञानसाधनानि वेदाः शास्त्राणि च । स्वस्वयोग्यं विज्ञानमपरोक्षान्तम् ॥ १३९ ॥

**एको विष्णुर्म्महद् भूतं पृथग् भूतान्यनेकशः ।**
**त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ १४० ॥**

भूतिमत्त्वाद् भूतम् । पृथग् भूतानि जीवाः । तेषामयमात्माऽन्तर्यामी स्वामी । विश्वं भुनक्ति पालयतीति विश्वभुक् । विश्वं भुङ्क्ते संहरति चान्ते । तेन च विश्वभुक् ॥ १४० ॥

**इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्त्तितम् ।**
**पठेद् य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १४१ ॥**

विष्णोः स्तवं विष्णोरेव व्यासाख्येन रूपेण कीर्तितम् ॥ १४१ ॥

**विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।**
**भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम्     ॥ १४२ ॥**

जगतः सुखस्य प्रभवं दुःखस्याप्ययं चेति चार्थः । 'प्रभुमव्ययम्' इति केचित् ॥ १४२ ॥

इमामाचार्यगोविंदो विष्णोर्नामसहस्रके ।
चकार भाष्यं सङ्क्षिप्तं मध्वमाधवपादयोः ॥

भासन्ते बहवो ह्यर्था गूढा नामनिनामनि ।
ग्रन्थगौरवभीरुत्वात् केचिदेवात्र कीर्तिताः ॥

एकत्र कथितेनैव पथाऽन्यानि पदानि च ।
शक्यनिर्वचनानीति न पृथक् तन्निरूपितम् ॥

वर्णसाम्येन निर्ब्रूयादिति प्राचां मताश्रया ।
निरुक्तिप्रक्रिया सेयं नैव व्याकरणाश्रया ॥

भगवद्गुणानुसन्धानरतिं केवलमाश्रिता ।
जीयादियं वैष्णवानां धन्ये धामनिधामनि ॥

श्रीमध्वभगवत्पादकृपयाऽनुपमानया ।
भक्तो निरुक्तमार्गज्ञो विज्ञो भाष्यमिदं व्यधात् ॥

**इत्याचार्यगोविन्दस्य कृतिषु**
**श्रीविष्णुसहस्रनामस्तोत्रव्याख्या नामचन्द्रिका समाप्ता ॥**

—०—

# परिशिष्टानि





# एकाक्षरनाममाला–१

वर्णमाला भवेद् यस्य नाममाला नमामि तम् ।
अक्षरं त्र्यक्षरं साक्षादादिक्षान्तपदोदितम् ॥ १ ॥

अकारः सर्ववागात्मा परब्रह्माभिधायकः ।
अभावान्यविरुद्धार्थस्तत् सर्वं परमे हरौ ॥ २ ॥

अभावात् सर्वदोषाणां वैलक्षण्याच्च सर्वतः ।
सर्वदोषविरुद्धानां गुणानामालयत्वतः ॥ ३ ॥

अकारेणोच्यते विष्णुरसाधारणनाम तत् ।
अजत्वादप्यकारोऽसौ सृजत्यजगतः स्वयम् ॥ ४ ॥

तस्मादमुख्यया वृत्त्या ब्रह्माऽपि क्वचिदः स्मृतः ।

* * *

अकारादागताः सर्वे दीपाद् दीपान्तरं यथा ॥ ५ ॥

अवतारा हरेः पूर्णा आ इत्येव प्रकीर्तिताः ।
अकारान्नाभिकमलादागतश्चतुराननः ॥ ६ ॥

सृष्टावकाराधिष्ठानमतः सोऽप्या इतीरितः ।
ईषद्ब्रह्मत्वमस्येत्यप्याब्रह्माणं तमूचिरे ॥ ७ ॥

* * *

सर्वेष्टत्वादिकारोऽसौ मनोजजनको हरिः ।
इष्यते कामिभिरिति इः कामोऽपि निगद्यते ॥ ८ ॥

* * *

ईष्टे सर्वस्य तेनासावीकारो हरिरीशिता ।
तमृतेऽन्यस्य सर्वस्य रमाऽपीष्ट इतीः स्मृता ॥ ९ ॥
तां पद्मिनीमीमिति च श्रुतिरेव स्वयं जगौ ।

* * *

ओङ्कारस्य द्वितीयोऽर्ण उकार उपरं हरिम् ॥ १० ॥
उच्चादुच्चतरं स्तौति नान्यं मुख्यतया क्वचित् ।
उग्रं वीरं नृसिंहं तमुकारं कवयो विदुः ॥ ११ ॥
अकारादात्मभूर्जज्ञे तस्मादुत्पद्यते हरः ।
तेनोग्रश्च उकारश्च उमापितरपीर्यते ॥ १२ ॥
एवं सभार्यः ससुतः सपौत्रः कीर्तितो हरिः ।

* * *

अवतीत्यूतिकृद् विष्णुरूकारः परिकीर्तितः ॥ १३ ॥

* * *

नारायण ऋ इत्युक्त ऋ गताविति यत् ततः ।
यथार्थज्ञानरूपत्वाद्दद्धत्वाच्च परात्परः ॥ १४ ॥

* * *

ॠ गताविति धातोस्तमॄकारं च प्रचक्षते ।
आधिक्येऽधिकमित्येव पूर्णज्ञानं जनार्दनम् ॥ १५ ॥

* * *

ऌॡकारावपि हरेः पर्याप्तिसहनार्थकौ ।
ऌङ् समाप्तावतः सर्वानलते ऌः समाप्नुते ॥ १६ ॥



सहने ॡङ् अतो भक्तापराधं सहते स ॡः ।

* * *

अधिकेष्टत्वतो विष्णुरे इत्येव प्रकीर्तितः ॥ १७ ॥
एक एवाद्वितीयोऽसावित्यप्येकार इष्यते ।

* * *

ईरं च प्रेरयन्नैर ऐकारेण प्रकीर्त्यते ॥ १८ ॥
अधिकश्चैक एवासौ ततोऽप्यै परमेश्वरः ।

* * *

अधिकोच्चस्तदो विष्णुः प्रणवप्रतिपादितः ॥ १९ ॥
गुणैरोतत्वतश्चायमो इत्येव श्रुतौ श्रुतः ।
ओ श्रावयेति भगवान् यज्ञे सम्बोध्यते बुधैः ॥ २० ॥

* * *

औषधं भवरोगस्य तस्मादाविति कीर्तितः ।
ओतमस्मिन् यदखिलं तस्मादप्याविति स्मृतः ॥ २१ ॥

* * *

जगतामन्तकत्वादम् अर्यत्वादश्च कीर्तितः ।

* * *

नित्यानन्दो हरिः कः किम् करोतीति च को हरिः ॥ २२ ॥
ब्रह्मवायू च कौ प्रोक्तौ जगतः सर्जनादपि ।
अत एव च दक्षोऽपि क इति क्वचिदुच्यते ॥ २३ ॥
आनन्दरूपो भगवान् कं ब्रह्मेति श्रुतीडितः ।
नीरं च कमिति प्रोक्तं पानेन सुखदं यतः ॥ २४ ॥

नीरायणत्वाच्च हरिः कवान् क इति कथ्यते।
इन्द्रियाणि च कानि स्युः साधनानि सुखस्य यत् ॥ २५ ॥

विशिष्य सुखदं यस्मान्मुख्यतो मन एव कम्।
मनसश्चेन्द्रियाणां च निलयत्वाच्छिरोऽपि च ॥ २६ ॥

क्वचित् कमुच्यते प्राज्ञैर्निलयत्वाद्धरेरपि।

* * *

अर्थानां खननात् ज्ञानं खं खं ब्रह्मेति चाऽगमः ॥ २७ ॥

तेन ज्ञानात्मकं ब्रह्म मुख्यतः खमितीरितम्।
ज्ञानं च खमिति प्रोक्तं ज्ञानदानीन्द्रियाणि च ॥ २८ ॥

सर्वमेतच्च भगवान् ज्ञानं ज्ञानी च तत्प्रदः।
अवकाशप्रदत्वेन गगनं च खमुच्यते ॥ २९ ॥

इन्द्रियैरवगम्यत्वात् सुखं च खमितीर्यते।

* * *

सर्वज्ञत्वात् सर्वगत्वात् गम्यत्वाद् विबुधैरपि ॥ ३० ॥

गाढत्वाद् गहनत्वाच्च ग इत्युक्तो गदाग्रजः।
गणानां च पतित्वेन गो गणेशश्च कीर्तितः ॥ ३१ ॥

* * *

दुष्टानामथ घर्मोऽयं सर्वं घटयति स्वयम् ।
घृ दीप्तौ क्षरणे च स्यादतो दीपयतीतरान् ॥ ३२ ॥

स्वयं च दीप्यते भक्तहृदये तैश्च दीप्यते।
क्षरत्यभीष्टं भक्तानां तेन घः परिकीर्तितः ॥ ३३ ॥

* * *



ङवन्त एनं श्रुतयस्तेनायं ङ इतीरितः।
ङुङ् शब्द इति धातुर्यत् सर्ववक्तृत्वतस्तथा ॥ ३४ ॥

विषये च ङशब्दः स्यात् सुज्ञानविषयो यतः।

* * *

चायं चरति सर्वत्र हृदये ज्ञानिभिश्चितः ॥ ३५ ॥

चण्डश्चासुरपूगस्य गुणानां च समुच्चयः।
चदेराह्लानाच्चोऽयं चन्द्रो धन्वन्तरिर्हरिः ॥ ३६ ॥

कच्छपं चं वदन्त्यार्याः कच्छपात्मा हरिश्च चः।

* * *

छन्दोभिश्छादितत्वात्तु छमेनं परिचक्षते ॥ ३७ ॥

मायायवनिकाच्छन्नो वासुदेवश्छ उच्यते।

* * *

नवोनवो जायतेऽयं जयत्यखिलशात्रवान् ॥ ३८ ॥

जप्यते मुनिभिर्नित्यं जनयत्यखिलं जगत्।
मृत्युञ्जयो ज इत्युक्तस्ततो जो जगदीश्वरः ॥ ३९ ॥

* * *

अरीणां झाटनाद् विष्णुर्झनामा प्रोच्यते बुधैः।

* * *

ञुङ् शब्द इत्यतश्चैनं ञवन्ते ञः प्रकीर्तितः ॥ ४० ॥

* * *

जगतष्टङ्कनाट् टोऽयं ठलत्यत्ति जगत् स ठः।
ठः शून्यवचनस्तेन दोषशून्यत्वतश्च ठः ॥ ४१ ॥

* * *

डप सङ्घात इत्यस्माज्जगड् डपयते यतः।
डयनाच्च डकारोऽयं डश्चापि वडवानलः ॥ ४२ ॥

✻ ✻ ✻

ढौकते सर्वतश्चायं भगवांस्तेन ढः स्मृतः।

✻ ✻ ✻

नारायणो ण इत्युक्तो भूषणं शरणं सताम् ॥ ४३ ॥

आदिमध्यान्तवर्णानामेकस्य ग्रहणे सति।
अखिलं गृह्यते नामेत्याचक्षत विचक्षणाः ॥ ४४ ॥

णकारो बलमित्युक्तं णश्च निर्वृतिवाचकः।
बलानन्दस्वरूपत्वाद् भगवाण्णः प्रकीर्तितः ॥ ४५ ॥

✻ ✻ ✻

तरन्त्यनेन संसारं तारोऽयं तापको द्विषाम्।
तपन्ति चैनं सततं तनोति सकलं जगत् ॥ ४६ ॥

ततत्वाच्च तदित्युक्तस्त इत्यपि निगद्यते।

✻ ✻ ✻

सर्वत्र स्थित इत्येष थकारः कथ्यते बुधैः ॥ ४७॥

✻ ✻ ✻

दयनाद् दमनाच्चेष्टदानाच्च द इतीरितः।
संसारं द्यति मोक्षं च ददातीति स दः स्मृतः ॥ ४८ ॥

✻ ✻ ✻

धारणात् पोषणाच्चापि धं हरिं परिचक्षते।
धनं धोऽयं धनाधीशो धो धर्मो धर्मविच्च धः ॥ ४९ ॥



धातरि स्रष्टरि गतो धाता ध इति धीयते।

✻ ✻ ✻

नारायणो न इत्युक्तो बुद्धरूपो विशेषतः ॥ ५० ॥

गृह्यते नेतिनेत्यात्मा नमन्त्येनं सुरासुराः।
नयतीति च नः प्रोक्तो नमयत्यखिलानपि ॥ ५१ ॥

✻ ✻ ✻

सुखपाता जगत्पाता पिता पः परिकीर्तितः।
परमः परितः पूर्णः परमात्मा परामृतः ॥ ५२ ॥

पावनः पवनश्चापि पावकः प इतीरितः।

✻ ✻ ✻

फलदः फलरूपश्च फूत्कारादसतामपि ॥ ५३ ॥

फणनात् सर्वगत्वात् फः फणीशशयनादपि।

✻ ✻ ✻

बं बलं बश्च कामः स्याद् ब कामन इति ह्यतः ॥ ५४ ॥

इच्छाबलस्वरूपोऽसौ ब इत्युक्तो बलानुजः।
वहतीति जलं बं स्याज्जलेशोऽपि च बः स्मृतः ॥ ५५ ॥

क्षीराब्धिशायी भगवान् मुख्यतो ब इतीरितः।

✻ ✻ ✻

शतमर्थाः प्रदर्श्यन्ते भकारस्य निदर्शनात् ॥ ५६ ॥

अन्यत्राप्येवमर्थानामनुसन्धानमिष्यते।
भगवान् भ इति प्रोक्तो (१) भगो भो भक्तवत्सलः (२) ॥ ५७ ॥

भान्तीति भान्यृक्षाणि तत्स्वामी च भ ईरितः (३)।
सूर्यचन्द्रादिषु गतो भातीति भ उदीरितः(४) ॥ ५८ ॥

यदादित्यगतं तेज इति तान् भासयत्यपि (५)।
भाति हृत्पद्ममध्यस्थो भक्तानामिति भः स्मृतः (६) ॥ ५९ ॥

भास्यते ज्ञानिभिः शास्त्रैः (७) भाव्यते चेति भः स हि (८)।
भा ज्ञाने ज्ञानरूपत्वाद्(९) भापनाज्ज्ञापनादपि (१०) ॥ ६० ॥

भायते ज्ञायते सद्भिः (११) भाति शुद्धे मनस्यपि (१२)।
भ आधारे भाति धत्ते जगदेतच्चराचरम् (१३) ॥ ६१ ॥

भापयत्यपि सर्वं यद् ब्रह्मरुद्रादिभिः सुरैः (१४)।
भायते ध्रियते सद्भिर्हृदि तेनापि भः स्मृतः(१५) ॥ ६२ ॥

भ औदार्ये महोदारः सर्वाभीष्टप्रदो हरिः (१६)।
क्वचित् करोति धनिनश्चोदारान् भान्त्यनेन ते (१७) ॥ ६३ ॥

बलेरौदार्यविषयः स्वेच्छया स भवन् हि भः (१८)।
भ सन्धाने स सन्धत्ते सकलं भुवनं हरिः (१९) ॥ ६४ ॥

सन्धापयति दूरस्थान् (२०) स्त्रीपुंसौ दम्पती अपि (२१)।
शात्रवानपि हार्देन(२२) हृदि सन्धीयते नृभिः (२३) ॥ ६५ ॥

भक्त्या दत्तमुपादत्ते पत्रं पुष्पं फलं जलम् (२४)।
भ उपादान इति भो भगवान् भक्तवत्सलः ॥ ६६ ॥

दैत्यान् निरस्य विबुधानुपादत्ते ततश्च भः(२५)।
भक्तिज्ञाने उपादत्ते नान्यत् किञ्चन तेन च (२६) ॥ ६७ ॥

स्वीकुर्वन्ति हुतं यज्ञे देवा एतेन तेन भः (२७)।
यदुपादीयते पादपङ्कजं तस्य भस्ततः (२८) ॥ ६८ ॥



भ नैकट्ये ततो भः स्यादन्तिकादन्तिको हरिः (२९)।
मुक्तिदानेन निकटं गमयेदपि सज्जनान् (३०) ॥ ६९ ॥

देशान्तरगतान् बन्धून् निकटं गमयेदपि(३१)।
निकटे स्वान्तरेवायं स्वान्ते भवति तेन भः (३२) ॥ ७०॥

भ सेव्यत्वे ततो भाति सेव्यो भवति सर्वशः (३३)।
परिवारतया सेव्या देवा एतेन तेन भः(३४) ॥ ७१ ॥

सेवते वसुदेवादीन् लीलयाऽयं ततोऽपि भः (३५)।
भ ऊरीकरणे भक्तान् भाति स्वीकुरुते हि भः (३६) ॥ ७२ ॥

ऊरीकरोति हार्देन भक्तसेवामतश्च भः(३७)।
प्रारब्धमपि चानिष्टमूरीकारयतीश्वरः(३८) ॥ ७३ ॥

भक्तैः सदोरीक्रियते भगवांस्तेन भः स्मृतः(३९)।
सम्पूर्णनतिभावे भा नमयत्यसुरान् खलान् (४०) ॥ ७४ ॥

नम्यते च सदा सद्भिः(४१) पित्रादीन् स नमत्यपि (४२)।
नानाभावे भ इत्यस्माद् भाति नाना भवत्यसौ ॥ ७५ ॥

एकोऽप्यनन्तरूपो हि (४३) तथा ब्रह्मादिकानपि।
नानात्वेनैव चाऽस्तम्बं सृजत्यवति पश्यति (४४) ॥ ७६ ॥

निखिलं वस्तुजातं च चक्रे नानाविधं विभुः (४५)।
एकोऽपि चिन्त्यते नाना भक्तैस्तेन च भः स्मृतः(४६) ॥ ७७ ॥

वैलक्षण्ये भ इत्यस्मात् सर्वस्माच्च विलक्षणः (४७)।
भिन्नांश्च भिन्नधर्मांश्च पदार्थान् निखिलानपि ॥ ७८ ॥

वैलक्षण्येनैव ससृजे तेन तं भं प्रचक्षते(४८)।
आधिक्ये भा भाति सर्वाधिको भवति सर्वदा (४९) ॥ ७९ ॥

आधिक्यदश्च देवानां ब्रह्मादीनां यथाक्रमम् (५०)।
आधिक्यदश्च भक्तानां (५१) मुक्तावाधिक्यदश्च भः (५२) ॥ ८० ॥

भ स्वातन्त्र्ये स्वतन्त्रो भो भगवानेक एव हि (५३)।
नीचानामुच्चतन्त्रत्वं ददातीति च भः स्मृतः (५४) ॥ ८१ ॥

भ आनन्दे परानन्दो(५५) भक्तानानन्दयत्यपि (५६)।
भक्तैरानन्द्यते नित्यं नित्यानन्दोऽपि तेन भः(५७) ॥ ८२ ॥

नित्यमिन्दिरयाऽऽनन्दसान्द्र(५८)स्तां नन्दयत्यपि (५९)।
इन्द्रियेषु गतो नित्यं भुङ्क्त आनन्दमेव सः(६०) ॥ ८३ ॥

नित्यानन्दप्रदो मुक्तौ ततश्च भ इतीरितः(६१)।
भ सन्ततेऽपि वचने सन्ततं वेदमुद्गिरन् ॥ ८४ ॥

हयग्रीवो भ इत्युक्तः(६२) सर्वे तेन वदन्ति हि।
ततोऽपि भगवान् भः स्यात्(६३) तद्गुणानेव सन्ततम् ॥ ८५ ॥

वदन्ति श्रुतयः सर्वाः शब्दा नादाश्च तेन भः (६४)।
कीर्त्यते नारदाद्यैश्च ततेन सह तेन भः (६५) ॥ ८६ ॥

भ पूज्यभावे सर्वैश्च भाति पूज्यो भवत्यसौ(६६)।
अधिष्ठानतया देवा अपि पूज्या यतः स भः(६७) ॥ ८७ ॥

पूजयत्यपि पित्रादीन् लोकशिक्षार्थमित्यपि (६८)।
भ विस्तारे भाति गुणैस्ततो भवति भस्ततः (६९) ॥ ८८ ॥

विस्तृतः कालतो नित्यो(७०) व्याप्तो देशेन विस्तृतः (७१)।
विस्तृतः शक्तितोऽनन्तो(७२)वेदैर्विस्तृतसद्गुणः (७३) ॥ ८९ ॥

विस्तारयति भक्तानां ज्ञानभक्ती ततः सुखम्(७४)।
अनन्तमहिमानश्च विस्तीर्यन्ते विचक्षणैः (७५) ॥ ९० ॥



भ विनाशे जगत् सर्वं विलापयति विप्लवे(७६)।
विनाशयन्ति संसारं ज्ञानिनस्तेन तेन भः (७७) ॥ ९१ ॥

भक्तानां दोषनिचयं विनाशयति तेन च(७८)।
दुष्टान् विनाशयति च(७९) दुष्टानां सुखमेव च (८०) ॥ ९२ ॥

अधर्मं नाशयति च धर्मसंस्थापनाय भः (८१)।
भ स्वामित्वे जगत्स्वामी(८२)देवाश्च स्वामिनोऽमुना(८३) ॥९३॥

भ नैश्चल्येऽचलस्तस्य महिमा तेन भः स्मृतः(८४)।
व्याप्तत्वान्न चलत्येष(८५) निर्धारान्न चलत्यपि(८६) ॥ ९४ ॥

स्वस्थानाच्च स्थाणुरिव(८७) निश्चलो निर्विकारकः (८८)।
भ उग्रभावेऽत्युग्रोऽयं पापिनां सुजनद्रुहाम् (८९) ॥ ९५ ॥

देवा अपि भवन्त्युग्रास्तत्प्रसादाय तेन भः(९०)।
भ उद्गाने श्रुतिगणैरयमुद्गीयतेऽनिशम्(९१) ॥ ९६ ॥

गीयते ब्रह्मरुद्राद्यैः(९२) स्वयमुद्गायति श्रुतीः(९३)।
गायत्येनं मरुत् साम्ना(९४)ऽनेन गायन्ति गायनाः(९५) ॥ ९७ ॥

सम्मोहने भ भगवान् भकारो मोहयन् जगत् (९६)।
सम्मोहयति दैत्यांश्च मोहिनीरूपमास्थितः (९७) ॥ ९८ ॥

बुद्धरूपेण च पुनः(९८) मायया मोहयत्यपि (९९)।
सम्मोहयन्त्यनेनैव कामिन्यः पुरुषानपि (१००) ॥ ९९ ॥

स्वयं क्वचित् दर्शयति मोहं प्राकृतवन्मुधा(१०१)।
भ सञ्चारे चरत्येष सीतामार्गणतत्परः (१०२) ॥ १०० ॥

निश्चलोऽपि चरत्येष लीलया सर्वतः प्रभुः (१०३)।
सञ्चारयति संसारे(१०४) भक्तहृत्पद्मसञ्चरः(१०५) ॥ १०१ ॥

ऋषिभिश्चार्यतेऽटव्यां(१०६) गोपबालैश्च चार्यते (१०७)।
विदारणे भ इत्युक्तेर्भ इत्युक्तो नृकेसरी ॥ १०२ ॥

हिरण्यकशिपोर्वक्षोविदारणनखांशुकः (१०८)।
भीमेन च जरासन्धं दारयामास तेन भः (१०९) ॥ १०३ ॥

गर्भं देवारिनारीणां शङ्खनादेन दारयन् (११०)।
भ आलोचन आलोच्य ससर्ज जगदीदृशम् (१११) ॥ १०४ ॥

आलोचयन्त्यनेनान्ये (११२) भक्तैरालोच्यते च सः (११३)।
भ सौन्दर्ये च सौन्दर्यमेनमाश्रित्य सार्थकम् (११४) ॥ १०५ ॥

अनेन नार्यः सुन्दर्यः सुन्दराश्च नरा अपि(११५)।
चक्षुषिस्थः सदा भाति सौन्दर्यविनियामकः ॥ १०६ ॥

वामनो भामनश्चेति(११६-११७) गतः स्त्रीपुंसयोर्हरिः।
अप्राकृतं च सौन्दर्यं तस्यैवेति स एव भः(११८) ॥ १०७ ॥

पुंरूपो भ इति प्रोक्तः स्त्रीरूपेण स एव भा।
स्त्रीपुन्दोषविहीनत्वात् स एव भमितीरितः ॥ १०८ ॥

ईषद् भान्तीति भानि स्युर्नक्षत्राण्यप्यमुख्यतः।

* * *

निर्माता ज्ञानरूपश्च ज्ञेयश्चान्तर्गतश्च सः ॥ १०९ ॥

सर्वेषां हृदि लीनश्च मर्यादा च ततश्च मः।

* * *

सर्वं जानाति सर्वत्र गच्छतीति स एव यः ॥ ११० ॥

यापयन् यमयंश्चापि यतन्तेऽनेन तेन च ।

* * *



आनन्दत्वाद् रमित्युक्तः प्रळये तेन रीयते ॥ १११ ॥

सृष्ट्यादिना क्रीडति च रमयत्यपि तेन रः

* * *

लालयन् लाययन् विश्वं लीनो लाता स लः स्मृतः ॥ ११२ ॥

* * *

वं ज्ञानं वं बलं तेन वकारो वासुदेवभाक् ।

* * *

सुखरूपः शमित्युक्तः शमयन् दुरितं च नः ॥ ११३ ॥

शान्तश्च शिशिरश्चायं शरी शारीरकश्च शः

* * *

षड्गुणत्वात् ष इत्युक्तो हृदि सस्ति ततश्च षः ॥ ११४ ॥

षस स्वप्ने षकारश्च प्राण आत्मा प्रणायकः।

* * *

परोक्षत्वात् स इत्युक्तः सारत्वात् सरणाच्च सः ॥ ११५ ॥

सम्पूर्णत्वात् समित्युक्तः समत्वाच्च समुच्चयात्।

* * *

दोषहानाद् दुष्टनाशात् सर्वज्ञः सर्वगश्च हः ॥ ११६ ॥

स एव हं स हीत्युक्तः सर्वशास्त्रप्रसिद्धितः।

* * *

कराळत्वाच्च ळः काळो नरसिंहो भयङ्करः ॥ ११७॥

* * *

क्षपणात् क्षमणाच्चापि निवासात् सर्वगत्वतः।
क्षि नावासे गतौ चेति क्षः क्षं देवो नृकेसरी ॥ ११८॥

एकाक्षराणि नामानि निरुक्तानि समासतः।
भगवद्वाचकानि स्युर्यथा सर्वाणि मुख्यतः ॥ ११९॥

* * *

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः।
वितेने विमलां नाममालां मध्वप्रसादतः ॥ १२०॥

**इत्याचार्यगोविन्दस्य कृतिषु**
**एकाक्षरनाममाला समाप्ता**

—o—



# मन्त्ररूपा नामावळिः—२

स्तोत्रेऽस्मिन् यानि विष्णोः सहस्रं नामानि, तान्येव चतुर्थ्या युक्तानि सनमःपदानि सहस्रं मन्त्रा भवन्ति । एभिर्मन्त्रपुष्पैर्भगवतोऽर्चनं महती वरिवस्या । अर्चनविधाने च प्रतिमन्त्रमोङ्कारेण सम्पुटीकरणमिष्यते । 'ॐ विश्वाय नमः ॐ','ॐ विष्णवे नमः ॐ' इत्यादि ॥

'विश्वाय नमः' इत्ययं पञ्चाक्षरो मन्त्रः । 'विष्णवे नमः' प्रसिद्धाद् विष्णु-षडक्षरादपरोऽयं विष्णुपञ्चाक्षरो मन्त्रः । एवं 'भूतकृते नमः' इति षडक्षरः । 'वषट्काराय नमः' इति सप्ताक्षरः । 'भूतभावनाय नमः' इत्यष्टाक्षरः । 'अनादिनिधनाय नमः' इति नवाक्षरः । 'स्पष्टाक्षराय मन्त्राय नमः' इति दशाक्षरः । 'भूतभव्यभवत्प्रभवे नमः' इत्येकादशाक्षरः । 'मुक्तानां परमायै गतये नमः' इति द्वादशाक्षरः । एवमाचतुरक्षात् (कस्मै नमः) आ द्वादशाक्षरं सहस्रं मन्त्रा भवन्ति ॥

केषुचिन्नामसु सम्प्रदायज्ञा एव विवदन्ते । तत्र पक्षद्वयानुसारं द्विविधमपि नामेह निरदिश्यत । स यथा–विशिष्टाय(अविशिष्टाय) नमः । यस्य यन्नाम रुचिरं स तेन नाम्नाऽर्चेत् । उभाभ्यामपि वा नामभ्याम् । सर्वनामा किल सः । नान्या गतिः, यावता इदमित्थमिति निर्णायकं गमकं नोपलभामहे ॥

क्वचिद् विभक्तिरूपविषयेऽप्यस्ति विवादः । यथा 'कस्मै (काय) नमः' । अत्रापि समः समाधिः । सर्वाणि च शब्दरूपाणि भगवन्तमेव हि निरूप-यन्ति । यथाकथाच प्रयुक्षीष्ट । वयं तु मन्यामहे कस्मायित्यादि सर्वनामरूपमेव वरमिति । सर्वनामसञ्ज्ञैः पदैरपि स एव सर्वगतः संस्तूयते । ततः किमिति रूपान्तरचिन्ता ॥

१. विश्वाय नमः
२. विष्णवे नमः
३. वषट्काराय नमः
४. भूतभव्यभवत्प्रभवे नमः
५. भूतकृते नमः
६. भूतभृते नमः
७. भावाय नमः
८. भूतात्मने नमः
९. भूतभावनाय नमः
१०. पूतात्मने नमः
११. परमात्मने नमः
१२. मुक्तानां परमायै गतये नमः
१३. अव्ययाय नमः
१४. पुरुषाय नमः
१५. साक्षिणे नमः
१६. क्षेत्रज्ञाय नमः
१७. अक्षराय नमः
१८. योगाय नमः
१९. योगविदांनेत्रे नमः
२०. प्रधानपुरुषेश्वराय नमः
२१. नारसिंहवपुषे नमः
२२. श्रीमते नमः
२३. केशवाय नमः
२४. पुरुषोत्तमाय नमः
२५. सर्वाय नमः
२६. शर्वाय नमः
२७. शिवाय नमः
२८. स्थाणवे नमः
२९. भूतादये नमः
३०. निधयेऽव्ययाय नमः
३१. सम्भवाय नमः
३२. भावनाय नमः
३३. भर्त्रे नमः
३४. प्रभवाय नमः
३५. प्रभवे नमः
३६. ईश्वराय नमः
३७. स्वयम्भुवे नमः
३८. शम्भवे नमः
३९. आदित्याय नमः
४०. पुष्कराक्षाय नमः
४१. महास्वनाय नमः
४२. अनादिनिधनाय नमः
४३. धात्रे नमः
४४. विधात्रे नमः
४५. धातुरुत्तमाय नमः
४६. अप्रमेयाय नमः
४७. हृषीकेशाय नमः
४८. पद्मनाभाय नमः
४९. अमरप्रभवे नमः
५०. विश्वकर्मणे नमः
५१. मनवे नमः
५२. त्वष्ट्रे नमः
५३. स्थविष्ठाय नमः
५४. स्थविराय ध्रुवाय नमः
५५. अग्राह्याय नमः
५६. शाश्वताय नमः
५७. कृष्णाय नमः
५८. लोहिताक्षाय नमः
५९. प्रतर्दनाय नमः
६०. प्रभूताय नमः
६१. त्रिककुद्धाम्ने नमः
६२. पवित्राय नमः
६३. मङ्गलाय पराय नमः
६४. ईशानाय नमः
६५. प्राणदाय नमः
६६. प्राणाय नमः
६७. ज्येष्ठाय नमः
६८. श्रेष्ठाय नमः
६९. प्रजापतये नमः
७०. हिरण्यगर्भाय नमः
७१. भूगर्भाय नमः
७२. माधवाय नमः
७३. मधुसूदनाय नमः
७४. ईश्वराय नमः
७५. विक्रमिणे नमः
७६. धन्विने नमः
७७. मेधाविने नमः
७८. विक्रमाय नमः
७९. क्रमाय नमः
८०. अनुत्तमाय नमः
८१. दुराधर्षाय नमः
८२. कृतज्ञाय नमः
८३. कृतये नमः
८४. आत्मवते नमः
८५. सुरेशाय नमः
८६. शरणाय नमः
८७. शर्मणे नमः
८८. विश्वरेतसे नमः
८९. प्रजाभवाय नमः
९०. अह्ने नमः
९१. संवत्सराय नमः
९२. व्यालाय नमः

९३. प्रत्ययाय नमः
९४. सर्वदर्शनाय नमः
९५. अजाय नमः
९६. सर्वेश्वराय नमः
९७. सिद्धाय नमः
९८. सिद्धये नमः
९९. सर्वादये नमः
१००. अच्युताय नमः
१०१. वृषाकपये नमः
१०२. अमेयात्मने नमः
१०३. सर्वयोगिविनिःसृताय नमः
१०४. वसवे नमः
१०५. वसुमनसे नमः
१०६. सत्याय नमः
१०७. समात्मने नमः
१०८. सम्मिताय (असम्मिताय) नमः
१०९. समाय नमः
११०. अमोघाय नमः
१११. पुण्डरीकाक्षाय नमः
११२. वृषकर्मणे नमः
११३. वृषाकपये नमः
११४. रुद्राय नमः
११५. बहुशिरसे नमः
११६. बभ्रवे नमः
११७. विश्वयोनये नमः
११८. शुचिश्रवसे नमः
११९. अमृताय नमः
१२०. शाश्वतस्थाणवे नमः
१२१. वरारोहाय नमः
१२२. महातपसे नमः
१२३. सर्वगाय नमः
१२४. सर्वविद्भानवे नमः
१२५. विष्वक्सेनाय नमः
१२६. जनार्दनाय नमः
१२७. वेदाय नमः
१२८. वेदविदे नमः
१२९. अव्यङ्गाय नमः
१३०. वेदाङ्गाय नमः
१३१. वेदविदे नमः
१३२. कवये नमः
१३३. लोकाध्यक्षाय नमः
१३४. सुराध्यक्षाय नमः
१३५. धमाध्यक्षाय नमः
१३६. कृताकृताय नमः
१३७. चतुरात्मने नमः



१३८. चतुर्व्यूहाय नमः
१३९. चतुर्दंष्ट्राय नमः
१४०. चतुर्भुजाय नमः
१४१. भ्राजिष्णवे नमः
१४२. भोजनाय नमः
१४३. भोक्त्रे नमः
१४४. सहिष्णवे नमः
१४५. जगदादिजाय नमः
१४६. अनघाय नमः
१४७. विजयाय नमः
१४८. जेत्रे नमः
१४९. विश्वयोनये नमः
१५०. पुनर्वसवे नमः
१५१. उपेन्द्राय नमः
१५२. वामनाय नमः
१५३. प्रांशवे नमः
१५४. अमोघाय नमः
१५५. शुचये नमः
१५६. ऊर्जिताय नमः
१५७. अतीन्द्राय नमः
१५८. सङ्ग्रहाय नमः
१५९. सर्गाय नमः
१६०. धृतात्मने नमः
१६१. नियमाय नमः
१६२. यमाय नमः
१६३. वेद्याय नमः
१६४. वैद्याय नमः
१६५. सदायोगिने नमः
१६६. वीरघ्ने नमः
१६७. माधवाय नमः
१६८. मधवे नमः
१६९. अतीन्द्रियाय नमः
१७०. महामायाय नमः
१७१. महोत्साहाय नमः
१७२. महाबलाय नमः
१७३. महाबुद्धये नमः
१७४. महावीर्याय नमः
१७५. महाशक्तये नमः
१७६. महाद्युतये नमः
१७७. अनिर्देश्यवपुषे नमः
१७८. श्रीमते नमः
१७९. अमेयात्मने नमः
१८०. महाद्रिधृषे नमः
१८१. महेष्वासाय नमः
१८२. महीभर्त्रे नमः
१८३. श्रीनिवासाय नमः

१८४. सताङ्गतये नमः
१८५. अनिरुद्धाय नमः
१८६. सुरानन्दाय नमः
१८७. गोविन्दाय नमः
१८८. गोविदाम्पतये नमः
१८९. मरीचये नमः
१९०. दमनाय नमः
१९१. हंसाय नमः
१९२. सुपर्णाय नमः
१९३. भुजगोत्तमाय नमः
१९४. हिरण्यनाभाय नमः
१९५. सुतपसे नमः
१९६. पद्मनाभाय नमः
१९७. प्रजापतये नमः
१९८. अमृत्यवे नमः
१९९. सर्वदृशे नमः
२००. सिंहाय नमः
२०१. सन्धात्रे नमः
२०२. सन्धिमते नमः
२०३. स्थिराय नमः
२०४. अजाय नमः
२०५. दुर्मर्षणाय नमः
२०६. शास्त्रे नमः
२०७. विश्रुतात्मने नमः
२०८. सुरारिघ्ने नमः
२०९. गुरवे नमः
२१०. गुरुतमाय नमः
२११. धाम्ने नमः
२१२. सत्याय नमः
२१३. सत्यपराक्रमाय नमः
२१४. निमिषाय नमः
२१५. अनिमिषाय नमः
२१६. स्रग्विणे नमः
२१७. वाचस्पतये नमः
२१८. उदारनिधये नमः
२१९. अग्रण्ये नमः
२२०. ग्रामण्ये नमः
२२१. श्रीमते नमः
२२२. न्यायाय नमः
२२३. नेत्रे नमः
२२४. समीरणाय नमः
२२५. सहस्रमूर्ध्ने नमः
२२६. विश्वात्मने नमः
२२७. सहस्राक्षाय नमः
२२८. सहस्रपदे नमः
२२९. आवर्तनाय नमः
२३०. निवृत्तात्मने नमः
२३१. संवृताय नमः
२३२. सम्प्रमर्दनाय नमः
२३३. अहःसंवर्त्तकाय नमः
२३४. वह्नये नमः
२३५. अनिलाय नमः
२३६. धरणीधराय नमः
२३७. सुप्रसादाय नमः
२३८. प्रसन्नात्मने नमः
२३९. विश्वधृषे नमः
२४०. विश्वभुजे नमः
२४१. विभवे नमः
२४२. सत्कर्त्रे नमः
२४३. सत्कृतये नमः
२४४. साधवे नमः
२४५. जह्नवे नमः
२४६. नारायणाय नमः
२४७. नराय नमः
२४८. असङ्ख्येयाय नमः
२४९. अप्रमेयात्मने नमः
२५०. विशिष्टाय नमः
२५१. शिष्टकृते नमः
२५२. शुचये नमः
२५३. सिद्धार्थाय नमः
२५४. सिद्धसङ्कल्पाय नमः
२५५. सिद्धिदाय नमः
२५६. सिद्धिसाधनाय नमः
२५७. वृषाहिणे नमः
२५८. वृषभाय नमः
२५९. विष्णवे नमः
२६०. वृषपर्वणे नमः
२६१. वृषोदराय नमः
२६२. वर्द्धनाय नमः
२६३. वर्द्धमानाय नमः
२६४. विविक्ताय नमः
२६५. श्रुतिसागराय नमः
२६६. सुभुजाय नमः
२६७. दुर्द्धराय नमः
२६८. वाग्मिने नमः
२६९. महेन्द्राय नमः
२७०. वसुदाय नमः
२७१. वसवे नमः
२७२. नैकरूपाय नमः
२७३. बृहद्रूपाय नमः
२७४. शिपिविष्टाय नमः
२७५. प्रकाशनाय नमः

२७६. ओजस्तेजोद्युतिधराय नमः
२७७. प्रकाशात्मने नमः
२७८. प्रतापनाय नमः
२७९. ऋद्धाय नमः
२८०. स्पष्टाक्षराय मन्त्राय नमः
२८१. चन्द्रांशवे नमः
२८२. भास्करद्युतये नमः
२८३. अमृतांशूद्भवाय नमः
२८४. भानवे नमः
२८५. शशबिन्दवे नमः
२८६. सुरेश्वराय नमः
२८७. औषधाय नमः
२८८. जगतःसेतवे नमः
२८९. सत्यधर्म्मपराक्रमाय नमः
२९०. भूतभव्यभवन्नाथाय नमः
२९१. पवनाय नमः
२९२. पावनाय नमः
२९३. अनलाय नमः
२९४. कामघ्ने नमः
२९५. कामकृते नमः
२९६. कान्ताय नमः
२९७. कामाय नमः
२९८. कामप्रदाय नमः
२९९. प्रभवे नमः
३००. युगादिकृते नमः
३०१. युगावर्त्ताय नमः
३०२. नैकमायाय नमः
३०३. महाशनाय नमः
३०४. अदृश्याय नमः
३०५. व्यक्तरूपाय (अव्यक्तरूपाय) नमः
३०६. सहस्रजिते नमः
३०७. अनन्तजिते नमः
३०८. इष्टाय नमः
३०९. विशिष्टाय (अविशिष्टाय) नमः
३१०. शिष्टेष्टाय नमः
३११. शिखण्डिने नमः
३१२. नहुषाय नमः
३१३. वृषाय नमः
३१४. क्रोधघ्ने नमः
३१५. क्रोधकृते नमः
३१६. कर्त्रे नमः
३१७. विश्वबाहवे नमः
३१८. महीधराय नमः
३१९. अच्युताय नमः



३२०. प्रथिताय नमः
३२१. प्राणय नमः
३२२. प्राणदाय नमः
३२३. वासवानुजाय नमः
३२४. अपांनिधये नमः
३२५. अधिष्ठानाय नमः
३२६. अप्रमत्ताय नमः
३२७. प्रतिष्ठिताय नमः
३२८. स्कन्दाय नमः
३२९. स्कन्दधराय नमः
३३०. धुर्याय नमः
३३१. वरदाय नमः
३३२. वायुवाहनाय नमः
३३३. वासुदेवाय नमः
३३४. बृहद्भानवे नमः
३३५. आदिदेवाय नमः
३३६. पुरन्दराय नमः
३३७. अशोकाय नमः
३३८. तारणाय नमः
३३९. ताराय नमः
३४०. शूराय नमः
३४१. शौरये नमः
३४२. जनेश्वराय नमः
३४३. अनुकूलाय नमः
३४४. शतावर्त्ताय नमः
३४५. पद्मिने नमः
३४६. पद्मनिभेक्षणाय नमः
३४७. पद्मनाभाय नमः
३४८. अरविन्दाक्षाय नमः
३४९. पद्मगर्भाय नमः
३५०. शरीरभृते नमः
३५१. महर्द्धये नमः
३५२. ऋद्धाय नमः
३५३. वृद्धात्मने नमः
३५४. महाक्षाय नमः
३५५. गरुडध्वजाय नमः
३५६. अतुलाय नमः
३५७. शरभाय नमः
३५८. भीमाय (अभीमाय) नमः
३५९. समयज्ञाय नमः
३६०. हविर्हरये नमः
३६१. सर्वलक्षणलक्षण्याय नमः
३६२. लक्ष्मीवते नमः
३६३. समितिञ्जयाय नमः
३६४. विक्षराय नमः
३६५. रोहिताय नमः

३६६. माग्र्गाय नमः
३६७. हेतवे नमः
३६८. दामोदराय नमः
३६९. सहाय नमः
३७०. महीधराय नमः
३७१. महाभागाय नमः
३७२. वेगवते नमः
३७३. अमिताशनाय नमः
३७४. उद्भवाय नमः
३७५. क्षोभणाय नमः
३७६. देवाय नमः
३७७. श्रीगर्भाय नमः
३७८. परमेश्वराय नमः
३७९. करणाय नमः
३८०. कारणाय नमः
३८१. कर्त्रे नमः
३८२. विकर्त्रे नमः
३८३. गहनाय नमः
३८४. गुहाय नमः
३८५. व्यवसायाय नमः
३८६. व्यवस्थानाय नमः
३८७. संस्थानाय नमः
३८८. स्थानदाय नमः

३८९. ध्रुवाय नमः
३९०. परर्द्धये नमः
३९१. परमस्पष्टाय नमः
३९२. तुष्टाय नमः
३९३. पुष्टाय नमः
३९४. शुभेक्षणाय नमः
३९५. रामाय नमः
३९६. विरामाय नमः
३९७. विरजाय नमः
३९८. मार्गाय नमः
३९९. नेयाय नमः
४००. नयाय नमः
४०१. अनयाय नमः
४०२. वीराय नमः
४०३. शक्तिमतां श्रेष्ठाय नमः
४०४. धर्म्माय नमः
४०५. धर्म्मविदुत्तमाय नमः
४०६. वैकुण्ठाय नमः
४०७. पुरुषाय नमः
४०८. प्राणाय नमः
४०९. प्राणदाय नमः
४१०. प्रणवाय नमः
४११. पृथवे नमः



४१२. हिरण्यगर्भाय नमः
४१३. शत्रुघ्नाय नमः
४१४. व्याप्ताय नमः
४१५. वायवे नमः
४१६. अधोक्षजाय नमः
४१७. ऋतवे नमः
४१८. सुदर्शनाय नमः
४१९. कालाय नमः
४२०. परमेष्ठिने नमः
४२१. परिग्रहाय नमः
४२२. उग्राय नमः
४२३. संवत्सराय नमः
४२४. दक्षाय नमः
४२५. विश्रामाय नमः
४२६. विश्वदक्षिणाय नमः
४२७. विस्ताराय नमः
४२८. स्थावरस्थाणवे नमः
४२९. प्रमाणाय नमः
४३०. बीजाय नमः
४३१. अव्ययाय नमः
४३२. अर्थाय नमः
४३३. अनर्थाय नमः
४३४. महाकोशाय नमः

४३५. महाभोगाय नमः
४३६. महाधनाय नमः
४३७. अनिर्विण्णाय नमः
४३८. स्थविष्ठाय नमः
४३९. भुवे (अभुवे) नमः
४४०. धर्मयूपाय नमः
४४१. महामखाय नमः
४४२. नक्षत्रनेमये नमः
४४३. नक्षत्रिणे नमः
४४४. क्षमाय नमः
४४५. क्षामाय नमः
४४६. समीहनाय नमः
४४७. यज्ञाय नमः
४४८. इज्याय नमः
४४९. महेज्याय नमः
४५०. क्रतवे नमः
४५१. सत्राय नमः
४५२. सताङ्गतये नमः
४५३. सर्वदर्शिने नमः
४५४. विमुक्तात्मने नमः
४५५. सर्वज्ञाय नमः
४५६. ज्ञानायोत्तमाय नमः
४५७. सुव्रताय नमः

४५८. सुमुखाय नमः
४५९. सूक्ष्माय नमः
४६०. सुघोषाय नमः
४६१. सुखदाय नमः
४६२. सुहृदे नमः
४६३. मनोहराय नमः
४६४. जितक्रोधाय नमः
४६५. वीरबाहवे नमः
४६६. विदारणाय नमः
४६७. स्वापनाय नमः
४६८. स्ववशाय नमः
४६९. व्यापिने नमः
४७०. नैकात्मने नमः
४७१. नैककर्मकृते नमः
४७२. वत्सराय नमः
४७३. वत्सलाय नमः
४७४. वत्सिने नमः
४७५. रत्नगर्भाय नमः
४७६. धनेश्वराय नमः
४७७. धर्मगुपे नमः
४७८. धर्मकृते नमः
४७९. धर्मिणे नमः
४८०. सते नमः

४८१. असते नमः
४८२. क्षराय नमः
४८३. अक्षराय नमः
४८४. अविज्ञात्रे नमः
४८५. सहस्रांशवे नमः
४८६. विधात्रे नमः
४८७. कृतलक्षणाय नमः
४८८. गभस्तिनेमये नमः
४८९. सत्वस्थाय नमः
४९०. सिंहाय नमः
४९१. भूतमहेश्वराय नमः
४९२. आदिदेवाय नमः
४९३. महादेवाय नमः
४९४. देवेशाय नमः
४९५. देवभृद्गुरवे नमः
४९६. उत्तराय नमः
४९७. गोपतये नमः
४९८. गोप्त्रे नमः
४९९. ज्ञानगम्याय नमः
५००. पुरातनाय नमः
५०१. शरीरभूतभृते नमः
५०२. भोक्त्रे नमः
५०३. कपीन्द्राय नमः



५०४. भूरिदक्षिणाय नमः
५०५. सोमपाय नमः
५०६. अमृतपाय नमः
५०७. सोमाय नमः
५०८. पुरुजिते नमः
५०९. पुरुसत्तमाय नमः
५१०. विनयाय नमः
५११. जयाय नमः
५१२. सत्यसन्धाय नमः
५१३. दाशार्हाय नमः
५१४. सात्वताम्पतये नमः
५१५. जीवाय नमः
५१६. विनयितासाक्षिणे नमः
५१७. मुकुन्दाय नमः
५१८. अमितविक्रमाय नमः
५१९. अम्भोनिधये नमः
५२०. अनन्तात्मने नमः
५२१. महोदधिशयाय नमः
५२२. अन्तकाय नमः
५२३. अजाय नमः
५२४. महार्हाय नमः
५२५. स्वाभाव्याय नमः
५२६. जितामित्राय नमः

५२७. प्रमोदनाय नमः
५२८. आनन्दाय नमः
५२९. नन्दनाय नमः
५३०. नन्दाय नमः
५३१. सत्यधर्मणे नमः
५३२. त्रिविक्रमाय नमः
५३३. महर्षये नमः
५३४. कपिलाचार्याय नमः
५३५. कृतज्ञाय नमः
५३६. मेदिनीपतये नमः
५३७. त्रिपदाय नमः
५३८. त्रिदशाध्यक्षाय नमः
५३९. महाशृङ्गाय नमः
५४०. कृतान्तकृते नमः
५४१. महावराहाय नमः
५४२. गोविन्दाय नमः
५४३. सुषेणाय नमः
५४४. कनकाङ्गदिने नमः
५४५. गुह्याय नमः
५४६. गभीराय नमः
५४७. गहनाय नमः
५४८. गुप्ताय नमः
५४९. चक्रगदाधराय नमः

५५०. वेधसे नमः
५५१. स्वाङ्गाय नमः
५५२. अजिताय नमः
५५३. कृष्णाय नमः
५५४. दृढाय नमः
५५५. सङ्कर्षणाय नमः
५५६. अच्युताय नमः
५५७. वरुणाय नमः
५५८. वारुणाय नमः
५५९. वृक्षाय नमः
५६०. पुष्कराक्षाय नमः
५६१. महामनसे नमः
५६२. भगवते नमः
५६३. भगघ्ने नमः
५६४. आनन्दिने नमः
५६५. वनमालिने नमः
५६६. हलायुधाय नमः
५६७. आदित्याय नमः
५६८. ज्योतिरादित्याय नमः
५६९. सहिष्णवे नमः
५७०. गतिसत्तमाय नमः
५७१. सुधन्वने नमः
५७२. खण्डपरशवे नमः
५७३. दारुणाय नमः
५७४. द्रविणप्रदाय नमः
५७५. दिवस्पृशे नमः
५७६. सर्वदृग्व्यासाय नमः
५७७. वाचस्पतये नमः
५७८. अयोनिजाय नमः
५७९. त्रिसाम्ने नमः
५८०. सामगाय नमः
५८१. साम्ने नमः
५८२. निर्बाणाय नमः
५८३. भेषजाय नमः
५८४. भिषजे नमः
५८५. सन्न्यासकृते नमः
५८६. शमाय नमः
५८७. शान्ताय नमः
५८८. निष्ठायै नमः
५८९. शान्तये नमः
५९०. परायणाय नमः
५९१. शुभाङ्गाय नमः
५९२. शान्तिदाय नमः
५९३. स्रष्ट्रे नमः
५९४. कुमुदाय नमः
५९५. कुवलेशयाय नमः



५९६. गोहिताय नमः
५९७. गोपतये नमः
५९८. गोप्त्रे नमः
५९९. वृषभाक्षाय नमः
६००. वृषप्रियाय नमः
६०१. अनिवर्त्तिने नमः
६०२. निवृत्तात्मने नमः
६०३. सङ्क्षेप्त्रे नमः
६०४. क्षेमकृच्छिवाय नमः
६०५. श्रीवत्सवक्षसे नमः
६०६. श्रीवासाय नमः
६०७. श्रीपतये नमः
६०८. श्रीमतांवराय नमः
६०९. श्रीदाय नमः
६१०. श्रीशाय नमः
६११. श्रीनिवासाय नमः
६१२. श्रीनिधये नमः
६१३. श्रीविभावनाय नमः
६१४. श्रीधराय नमः
६१५. श्रीकराय नमः
६१६. श्रेयसे नमः
६१७. श्रीमते नमः
६१८. लोकत्रयाश्रयाय नमः
६१९. स्वक्षाय नमः
६२०. स्वङ्गाय नमः
६२१. शतानन्दाय नमः
६२२. नन्दये नमः
६२३. ज्योतिर्गणेश्वराय नमः
६२४. विजितात्मने नमः
६२५. विधेयात्मने (अविधेयात्मने) नमः
६२६. सत्कीर्त्तये नमः
६२७. छिन्नसंशयाय नमः
६२८. उदीर्णाय नमः
६२९. सर्वतश्चक्षुषे नमः
६३०. अनीशाय नमः
६३१. शाश्वतस्थिराय नमः
६३२. भूशयाय नमः
६३३. भूषणाय नमः
६३४. भूतये नमः
६३५. विशोकाय नमः
६३६. शोकनाशनाय नमः
६३७. अर्च्चिष्मते नमः
६३८. अर्च्चिताय नमः
६३९. कुम्भाय नमः
६४०. विशुद्धात्मने नमः

६४१. विशोधनाय नमः
६४२. अनिरुद्धाय नमः
६४३. अप्रतिरथाय नमः
६४४. प्रद्युम्नाय नमः
६४५. अमितविक्रमाय नमः
६४६. कालनेमिनिघ्ने नमः
६४७. वीराय नमः
६४८. शौरये नमः
६४९. शूरजनेश्वराय नमः
६५०. त्रिलोकात्मने नमः
६५१. त्रिलोकेशाय नमः
६५२. केशवाय नमः
६५३. केशिघ्ने नमः
६५४. हरये नमः
६५५. कामदेवाय नमः
६५६. कामपालाय नमः
६५७. कामिने नमः
६५८. कान्ताय नमः
६५९. कृतागमाय नमः
६६०. अनिर्देश्यवपुषे नमः
६६१. विष्णवे नमः
६६२. वीराय नमः
६६३. अनन्ताय नमः

६६४. धनञ्जयाय नमः
६६५. ब्रह्मण्याय नमः
६६६. ब्रह्मकृते नमः
६६७. ब्रह्मणे नमः
६६८. ब्रह्मणे नमः
६६९. ब्रह्मविवर्द्धनाय नमः
६७०. ब्रह्मविदे नमः
६७१. ब्राह्मणाय नमः
६७२. ब्रह्मिणे नमः
६७३. ब्रह्मज्ञाय नमः
६७४. ब्राह्मणप्रियाय नमः
६७५. महाक्रमाय नमः
६७६. महाकर्म्मणे नमः
६७७. महातेजसे नमः
६७८. महोरगाय नमः
६७९. महाक्रतवे नमः
६८०. महायज्वने नमः
६८१. महायज्ञाय नमः
६८२. महाहविषे नमः
६८३. स्तव्याय नमः
६८४. स्तवप्रियाय नमः
६८५. स्तोत्राय नमः
६८६. स्तुतये नमः



६८७. स्तोत्रे नमः
६८८. रणप्रियाय नमः
६८९. पूर्णाय नमः
६९०. पूरयित्रे नमः
६९१. पुण्याय नमः
६९२. पुण्यकीर्त्तये नमः
६९३. अनामयाय नमः
६९४. मनोजवाय नमः
६९५. तीर्त्थकराय नमः
६९६. वसुरेतसे नमः
६९७. वसुप्रदाय नमः
६९८. वसुप्रदाय नमः
६९९. वासुदेवाय नमः
७००. वसवे नमः
७०१. वसुमनसे नमः
७०२. हविषे नमः
७०३. सद्गतये नमः
७०४. सत्कृतये नमः
७०५. सत्तायै नमः
७०६. सद्भूतये नमः
७०७. सत्परायणाय नमः
७०८. शूरसेनाय नमः
७०९. यदुश्रेष्ठाय नमः

७१०. सन्निवासाय नमः
७११. सुयामुनाय नमः
७१२. भूतवासाय नमः
७१३. वासुदेवाय नमः
७१४. सर्वासुनिलयाय नमः
७१५. अनलाय नमः
७१६. दर्पघ्ने नमः
७१७. दर्पाय नमः
७१८. दृप्ताय नमः
७१९. दुर्द्धराय नमः
७२०. अपराजिताय नमः
७२१. विश्वमूर्त्तये नमः
७२२. महामूर्त्तये नमः
७२३. दीप्तमूर्त्तये नमः
७२४. अमूर्त्तिमते नमः
७२५. अनेकमूर्त्तये नमः
७२६. अव्यक्ताय नमः
७२७. शतमूर्त्तये नमः
७२८. शताननाय नमः
७२९. एकाय नमः
७३०. नैकाय नमः
७३१. सवाय नमः
७३२. कस्मै (काय) नमः

७३३. कस्मै (किमे) नमः
७३४. यस्मै (यदे) नमः
७३५. तस्मै (तदे) नमः
७३६. पदायानुत्तमाय नमः
७३७. लोकबन्धवे नमः
७३८. लोकनाथाय नमः
७३९. माधवाय नमः
७४०. भक्तवत्सलाय नमः
७४१. सुवर्णवर्णाय नमः
७४२. हेमाङ्गाय नमः
७४३. वराङ्गाय नमः
७४४. चन्दनाङ्गदिने नमः
७४५. वीरघ्ने नमः
७४६. विषमाय नमः
७४७. शून्याय नमः
७४८. घृताशिषे नमः
७४९. अचलाय नमः
७५०. चलाय नमः
७५१. अमानिने नमः
७५२. मानदाय नमः
७५३. मान्याय नमः
७५४. लोकस्वामिने नमः
७५५. त्रिलोकधृषे नमः
७५६. सुमेधसे नमः
७५७. मेधजाय नमः
७५८. धन्याय नमः
७५९. सत्यमेधसे नमः
७६०. धराधराय नमः
७६१. तेजोवृषाय नमः
७६२. द्युतिधराय नमः
७६३. सर्वशस्त्रभृतांवराय नमः
७६४. प्रग्रहाय नमः
७६५. निग्रहाय नमः
७६६. व्यग्राय नमः
७६७. नैकशृङ्गाय नमः
७६८. गदाग्रजाय नमः
७६९. चतुर्मूर्त्तये नमः
७७०. चतुर्बाहवे नमः
७७१. चतुर्व्यूहाय नमः
७७२. चतुर्गतये नमः
७७३. चतुरात्मने नमः
७७४. चतुर्भावाय नमः
७७५. चतुर्वेदविदे नमः
७७६. एकपदे नमः
७७७. समावर्त्ताय नमः
७७८. निवृत्तात्मने (अनिवृत्तात्मने) नमः



७७९. दुर्ज्जयाय नमः
७८०. दुरतिक्रमाय नमः
७८१. दुर्ल्लभाय नमः
७८२. दुर्गमाय नमः
७८३. दुर्गाय नमः
७८४. दुरावासाय नमः
७८५. दुरारिघ्ने नमः
७८६. शुभाङ्गाय नमः
७८७. लोकसारङ्गाय नमः
७८८. सुतन्तवे नमः
७८९. तन्तुवर्द्धनाय नमः
७९०. इन्द्रकर्मणे नमः
७९१. महाकर्मणे नमः
७९२. कृतकर्मणे नमः
७९३. कृतागमाय नमः
७९४. उद्भवाय नमः
७९५. सुन्दराय नमः
७९६. सुन्दाय नमः
७९७. रत्ननाभाय नमः
७९८. सुलोचनाय नमः
७९९. अर्क्काय नमः
८००. वाजसनाय नमः
८०१. शृङ्गिणे नमः
८०२. जयन्ताय नमः
८०३. सर्वविज्जयिने नमः
८०४. सुवर्ण्णबिन्दवे नमः
८०५. अक्षोभ्याय नमः
८०६. सर्ववागीश्वरेश्वराय नमः
८०७. महाह्रदाय नमः
८०८. महागर्त्ताय नमः
८०९. महाभूताय नमः
८१०. महानिधये नमः
८११. कुमुदाय नमः
८१२. कुन्दराय नमः
८१३. कुन्दाय नमः
८१४. पर्ज्जन्याय नमः
८१५. पावनाय नमः
८१६. अनिलाय नमः
८१७. अमृताशाय नमः
८१८. अमृतवपुषे नमः
८१९. सर्वज्ञाय नमः
८२०. सर्वतोमुखाय नमः
८२१. सुलभाय नमः
८२२. सुव्रताय नमः
८२३. सिद्धाय नमः
८२४. शत्रुजिते नमः

८२५. शत्रुतापनाय नमः
८२६. न्यग्रोधाय नमः
८२७. उदुम्बराय नमः
८२८. अश्वत्थाय नमः
८२९. चाणूरान्ध्रनिसूदनाय नमः
८३०. सहस्रार्च्चिषे नमः
८३१. सप्तजिह्वाय नमः
८३२. सप्तैधसे नमः
८३३. सप्तवाहनाय नमः
८३४. अमूर्त्तये नमः
८३५. अनघाय नमः
८३६. अचिन्त्याय नमः
८३७. भयकृते नमः
८३८. भयनाशनाय नमः
८३९. अणवे नमः
८४०. बृहते नमः
८४१. कृशाय नमः
८४२. स्थूलाय नमः
८४३. गुणभृते नमः
८४४. निर्गुणाय नमः
८४५. महते नमः
८४६. अधृताय नमः
८४७. स्वधृताय नमः

८४८. स्वास्याय नमः
८४९. प्राग्वंशाय नमः
८५०. वंशवर्द्धनाय नमः
८५१. भारभृते नमः
८५२. कथिताय नमः
८५३. योगिने नमः
८५४. योगीशाय नमः
८५५. सर्वकामदाय नमः
८५६. आश्रमाय नमः
८५७. श्रमणाय नमः
८५८. क्षामाय नमः
८५९. सुपर्णाय नमः
८६०. वायुवाहनाय नमः
८६१. धनुर्द्धराय नमः
८६२. धनुर्वेदाय नमः
८६३. धण्डाय नमः
८६४. दमयित्रे नमः
८६५. दमाय नमः
८६६. अपराजिताय नमः
८६७. सर्वसहाय नमः
८६८. नियन्त्रे नमः
८६९. नियमाय (अनियमाय) नमः
८७०. यमाय (अयमाय) नमः



८७१. सत्ववते नमः
८७२. सात्विकाय नमः
८७३. सत्याय नमः
८७४. सत्यधर्म्मपरायणाय नमः
८७५. अभिप्रायाय नमः
८७६. प्रियार्हाय नमः
८७७. अर्हप्रियकृते नमः
८७८. प्रीतिवर्द्धनाय नमः
८७९. विहायसगतये नम
८८०. ज्योतिषे नमः
८८१. सुरुचये नमः
८८२. हुतभुग्विभवे नमः
८८३. रवये नमः
८८४. विरोचनाय नमः
८८५. सूर्याय नमः
८८६. सवित्रे नमः
८८७. रविलोचनाय नमः
८८८. अनन्ताय नमः
८८९. हुतभुग्भोक्त्रे नमः
८९०. सुखदाय नमः
८९१. नैकजाय नमः
८९२. अग्रजाय नमः
८९३. अनिर्विण्णाय नमः

८९४. सदामर्षिणे नमः
८९५. लोकाधिष्ठानाय नमः
८९६. अद्भुताय नमः
८९७. सनात् (सनादे) नमः
८९८. सनातनतमाय नमः
८९९. कपिलाय नमः
९००. कपये नमः
९०१. अप्ययाय नमः
९०२. स्वस्तिदाय नमः
९०३. स्वस्तिकृते नमः
९०४. स्वस्ति (स्वस्तिने) नमः
९०५. स्वस्तिभुजे नमः
९०६. स्वस्तिदक्षिणाय नमः
९०७. अरौद्राय नमः
९०८. कुण्डलिने नमः
९०९. चक्रिणे नमः
९१०. विक्रमिणे नमः
९११. ऊर्ज्जितशासनाय नमः
९१२. शब्दातिगाय नमः
९१३. शब्दसहाय नमः
९१४. शिशिराय नमः
९१५. शर्वरीकराय नमः
९१६. अक्रूराय नमः

९१७. पेशलाय नमः
९१८. दक्षाय नमः
९१९. दक्षिणाय नमः
९२०. क्षमिणांवराय नमः
९२१. विद्वत्तमाय नमः
९२२. वीतभयाय नमः
९२३. पुण्यश्रवणकीर्त्तनाय नमः
९२४. उत्तारणाय नमः
९२५. दुष्कृतिघ्ने नमः
९२६. पुण्याय नमः
९२७. दुःस्वप्ननाशनाय नमः
९२८. वीरघ्ने नमः
९२९. रक्षणाय नमः
९३०. सन्ताय नमः
९३१. जीवनाय नमः
९३२. पर्य्यवस्थिताय नमः
९३३. अनन्तरूपाय नमः
९३४. अनन्तश्रिये नमः
९३५. जितमन्यवे नमः
९३६. भयापहाय नमः
९३७. चतुरश्राय नमः
९३८. गभीरात्मने नमः
९३९. विदिशाय नमः
९४०. व्यादिशाय नमः
९४१. दिशाय नमः
९४२. अनादये नमः
९४३. भूर्भुवोलक्ष्म्यै नमः
९४४. सुवीराय नमः
९४५. रुचिराङ्गदाय नमः
९४६. जननाय नमः
९४७. जनजन्मादये नमः
९४८. भीमाय नमः
९४९. भीमपराक्रमाय नमः
९५०. आधारनिलयाय नमः
९५१. धात्रे (अधात्रे) नमः
९५२. पुष्पहासाय नमः
९५३. प्रजागराय नमः
९५४. ऊर्ध्वगाय नमः
९५५. सत्पथाचाराय नमः
९५६. प्राणदाय नमः
९५७. प्रणवाय नमः
९५८. पणाय नमः
९५९. प्रमाणाय नमः
९६०. प्राणनिलयाय नमः
९६१. प्राणभृते नमः
९६२. प्राणजीवनाय नमः



९६३. तत्वाय नमः
९६४. तत्वविदे नमः
९६५. एकात्मने नमः
९६६. जन्ममृत्युजरातिगाय नमः
९६७. भूर्भुवःस्वस्तरवे नमः
९६८. ताराय नमः
९६९. सवित्रे नमः
९७०. प्रपितामहाय नमः
९७१. यज्ञाय नमः
९७२. यज्ञपतये नमः
९७३. यज्वने नमः
९७४. यज्ञाङ्गाय नमः
९७५. यज्ञवाहनाय नमः
९७६. यज्ञभृते नमः
९७७. यज्ञकृते नमः
९७८. यज्ञिने नमः
९७९. यज्ञभुजे नमः
९८०. यज्ञसाधनाय नमः
९८१. यज्ञान्तकृते नमः
९८२. यज्ञगुह्याय नमः
९८३. अन्नाय नमः
९८४. अन्नादाय नमः
९८५. आत्मयोनये नमः
९८६. स्वयञ्जाताय नमः
९८७. वैखानाय नमः
९८८. सामगायनाय नमः
९८९. देवकीनन्दनाय नमः
९९०. स्रष्ट्रे नमः
९९१. क्षितीशाय नमः
९९२. पापनाशनाय नमः
९९३. शङ्खभृते नमः
९९४. नन्दकिने नमः
९९५. चक्रिणे नमः
९९६. शाङ्गधन्वने नमः
९९७. गदाधराय नमः
९९८. रथाङ्गपाणये नमः
९९९. अक्षोभ्याय नमः
१०००. सर्वप्रहरणायुधाय नमः

—०—

# यदक्षरादीनि यावन्ति नामानि—३

## (अक्षरानुक्रमम्)

| नाम्न आद्यमक्षरम् | नामसङ्ख्या | नाम्न आद्यमक्षरम् | नामसङ्ख्या |
|---|---|---|---|
| १. अ | १०६ | १८. त | १९ |
| २. आ | ११ | १९. द | ३६ |
| ३. इ | ३ | २०. ध | २२ |
| ४. ई | ३ | २१. न | ३३ |
| ५. उ | ९ | २२. प | ८३ |
| ६. ऊ | ३ | २३. ब | १६ |
| ७. ऋ | ३ | २४. भ | ३९ |
| ८. ए | ३ | २५. म | ६५ |
| ९. ओ | १ | २६. य | २३ |
| १०. औ | १ | २७. र | ११ |
| ११. क | ५० | २८. ल | ९ |
| १२. ख | १ | २९. व | ११८ |
| १३. ग | २४ | ३०. श | ७० |
| १४. घ | १ | ३१. स | १७३ |
| १५. च | १९ | ३२. ह | १३ |
| १६. छ | १ | ३३. क्ष | ९ |
| १७. ज | २२ | | १००० |



## (सङ्ख्यानुक्रमम्)

| नामसङ्ख्या | नाम्न आद्यमक्षरम् | नामसङ्ख्या | नाम्न आद्यमक्षरम् |
|---|---|---|---|
| १. | (ओ, औ, ख, घ, छ) | ३३. | (न) |
| ३. | (इ, ई, ऊ, ऋ, ए) | ३६. | (द) |
| ९. | (उ, ल, क्ष) | ३९. | (भ) |
| ११. | (आ ,र) | ५०. | (क) |
| १३. | (ह) | ६५. | (म) |
| १६. | (ब) | ७०. | (श) |
| १९. | (च, त) | ८३. | (प) |
| २२. | (ज, ध) | १०६. | (अ) |
| २३. | (य) | ११८. | (व) |
| २४. | (ग) | १७३. | (स) |

—०—

# आम्रेडितानि नामानि—४

द्विरुक्तानि नामानि (७८)। एषु चत्वारि अकारादीनि नामान्तराणि भवन्ति ।

| | | | | | |
|---|---|---|---|---|---|
| १. | अनघः | १४६; ८३५ | १९. | कान्तः | २९६; ६५८ |
| २. | अनन्तः | ६६३; ८८८ | २०. | कुमुदः | ५९४; ८११ |
| ३. | अनलः | २९३; ७१५ | २१. | कृतज्ञः | ८२; ५३५ |
| ४. | अनिरुद्धः | १८५; ६४२ | २२. | कृतागमः | ६५९; ७९३ |
| ५. | अनिर्देश्यवपुः | १७७; ६६० | २३. | कृष्णः | ५७; ५५३ |
| ६. | अनिर्विण्णः | ४३७; ८९३ | २४. | केशवः | २३; ६५२ |
| ७. | अनिलः | २३५; ८१६ | २५. | गहनः | ३८३;५४७ |
| ८. | अपराजितः | ७२०; ८६६ | २६. | गोपतिः | ४९७; ५९७ |
| ९. | अमितविक्रमः | ५१८; ६४५ | २७. | गोप्ता | ४९८; ५९८ |
| १०. | अमेयात्मा | १०२; १७९ | २८. | गोविन्दः | १८७; ५४२ |
| ११. | अमोघः | ११०; १५४ | २९. | चक्री | ९०९; ९९५ |
| १२. | अक्षोभ्यः | ८०५;९९९ | ३०. | चतुरात्मा | १३७; ७७३ |
| १३. | आदित्यः | ३९; ५६७ | ३१. | चतुर्व्यूहः | १३८; ७७१ |
| १४. | आदिदेवः | ३३५; ४९२ | ३२. | तारः | ३३९; ९६८ |
| १५. | ईश्वरः | ३६; ७४ | ३३. | दक्षः | ४२४; ९१८ |
| १६. | उद्भवः | ३७४; ७९४ | ३४. | दुर्द्धरः | २६७; ७१९ |
| १७. | ऋद्धः | २७९; ३५२ | ३५. | धाता | ४३; ९५१ |
| १८. | कर्त्ता | ३१६; ३८१ | ३६. | नियमः | १६१; ८६९ |



| | | | | | |
|---|---|---|---|---|---|
| ३७. | निवृत्तात्मा | २३०; ६०२ | ५८. | विधाता | ४४; ४८६ |
| ३८. | पावनः | २९२; ८१५ | ५९. | विश्वयोनिः | ११७; १४९ |
| ३९. | पुण्यः | ६९१; ९२६ | ६०. | वेदवित् | १२८; १३१ |
| ४०. | पुरुषः | १४; ४०७ | ६१. | शुचिः | १५५; २५२ |
| ४१. | पुष्कराक्षः | ४०; ५६० | ६२. | शुभाङ्गः | ५९१; ७८६ |
| ४२. | प्रजापतिः | ६९; १९७ | ६३. | शौरिः | ३४१; ६४८ |
| ४३. | प्रणवः | ४१०; ९५७ | ६४. | श्रीनिवासः | १८३; ६११ |
| ४४. | प्रभुः | ३५; २९९ | ६५. | संवत्सरः | ९१; ४२३ |
| ४५. | प्रमाणम् | ४२९; ९५९ | ६६. | सताङ्गतिः | १८४; ४५२ |
| ४६. | भीमः | ३५८; ९४८ | ६७. | सर्वज्ञः | ४५५; ८१९ |
| ४७. | भोक्ता | १४३; ५०२ | ६८. | सविता | ८८६; ९६९ |
| ४८. | महाकर्म्मा | ६७६; ७९१ | ६९. | सहिष्णुः | १४४; ५६९ |
| ४९. | महीधरः | ३१८; ३७० | ७०. | सिंहः | २००; ४९० |
| ५०. | मार्ग्गः | ३६६; ३९८ | ७१. | सिद्धः | ९७; ८२३ |
| ५१. | यज्ञः | ४४७; ९७१ | ७२. | सुखदः | ४६१; ८९० |
| ५२. | यमः | १६२; ८७० | ७३. | सुपर्ण्णः | १९२; ८५९ |
| ५३. | वसुप्रदः | ६९७; ६९८ | ७४. | सुव्रतः | ४५७; ८२२ |
| ५४. | वसुमनाः | १०५; ७०१ | ७५. | स्थविष्ठः | ५३; ४३८ |
| ५५. | वाचस्पतिः | २१७; ५७७ | ७६. | स्रष्टा | ५९३; ९९० |
| ५६. | वायुवाहनः | ३३२; ८६० | ७७. | हिरण्यगर्भः | ७०; ४१२ |
| ५७. | विक्रमी | ७५; ९१० | ७८. | क्षामः | ४४५; ८५८ |

—०—

एषु चत्वारि अकारादीनि नामानीति केचिन्मन्यन्ते ।

| | | | | | |
|---|---|---|---|---|---|
| १. | धाता (अधता) | ९५१ | ३. | भीमः (अभीमः) | ३५८ |
| २. | नियमः (अनियमः) | ८६९ | ४. | यमः (अयमः) | ८७० |

तेषां प्रहाणे द्विरुक्तानि ७४ नामानि भवन्ति ।

**लिङ्गभेदेन द्विरुक्तानि नामानि (३)**

| | | | | |
|---|---|---|---|---|
| १. | अव्ययः | (१३) | अव्ययम् | (४३१) |
| २. | अक्षरः | (१७) | अक्षरम् | (४८३) |
| ३. | ब्रह्मा | (६६७) | ब्रह्म | (६६८) |

**त्रिरुक्तानि नामानि (११)**

| | |
|---|---|
| १. अच्युतः १००; ३१९; ५५६ | ६. वसुः १०४; २७१; ७०० |
| २. अजः ९५; २०४; ५२३ | ७. वासुदेवः ३३३; ६९९; ७१३ |
| ३. पद्मनाभः ४८; १९६; ३४७ | ८. विष्णुः २; २५९; ६६१ |
| ४. प्राणः ६६; ३२१; ४०८ | ९. वीरः ४०२; ६४७; ६६२ |
| ५. माधवः ७२; १६७; ७३९ | १०. वीरहा १६६; ७४५;९२८ |

११. सत्यः १०६;२१२;८७३

अत्रापि केषाञ्चित् पक्षे 'अनिवृत्तात्मा' (७७८) अकारविश्लेषेण 'निवृत्तात्मा' भवति । तदा निवृत्तात्मेति त्रिरुक्तं भवति । त्रिरुक्तानि च नामानि द्वादश भवन्ति ॥

**चतुर्वारमुक्तानि नामानि (२)**

| | | |
|---|---|---|
| १. | प्राणदः | ६५; ३२२; ४०९; ९५६ |
| २. | श्रीमान् | २२; १७८; २२१; ६१७ |



# नाम्नामकाराद्यनुक्रमणिका–५

(पाठान्तरेणाऽवृत्तानि नामान्यत्र () एतच्चिह्नान्तर्निक्षिप्तानि । यथा– धाता (अधाता) । न तानि सहस्रेऽन्तर्भवन्ति । केवलं पाठान्तरसूचनमात्रमेवेदम् । पाणिनीयनये न क्षकारः पृथगक्षरतां भजते । आगमशास्त्रानुसारेण तु क्षकारो वर्णमालायाश्चरमो वर्णः– शषसहळक्षेति । अत्रापि सैव सरणिरनुसृता । तेन क्षकारादीनि नामान्यन्ते निरूपितानि । तद्यथा क्षमः, क्षमिणां वरः, क्षरम्, क्षाम इत्यादि ।)

—०—



# श्लोकार्द्धानुक्रमणिका—६

**ब**



**भ**



**म**



**य**





**र**



**ल**



**व**



**श**

—०—